मामके पितरि विजयनगरसिंहासनमधिष्ठाय शासति—इक्षूणां पीडनं, पक्षिणां ग्रहणं, पदानां विग्रहः, प्रत्ययानां लोपः, क्ङिङ्-ङित्पराणां गुणवृद्ध्यभावः, अभावो न्याये, अर्थवादो मीमांसायां, ग्रहपीडाविचारो ज्योतिषे, आयुर्वेदे रोगवार्ता, पातञ्जले धारण-प्राणसंयमौ, सांख्ये पुरुषस्याप्रधानता, गणितेषु व्यवकलनं, पादच्छेदो वृत्तेषु, कुकविकाव्येषु यतिभ्रंशः, चित्रेषु वर्णसङ्करः, वेदान्ते मिथ्यावादः, न प्रजासु ॥

एवमप्रतिहतप्रभावाय भूपतये द्रुह्यन्तः के चन परचक्रिणः पार्थिवाः कूटेनाऽऽस्माकीनाः प्रजा वशीकृत्य समराय समाह्वयन्त पार्थिवम् । तदनु शत्रुभिस्समाक्रान्तां राज्यश्रियं न शशाक भूपतिः परित्रातुम् । आस्माकीना राज्यश्रीरपि तृणाय मत्वा निजं पतिं, क्षीबमिव मत्तकाशिनी, प्रबलं परमवलम्बे; प्रबलाश्रया-दस्मान्परिजहास च कामम् । अमिततेजसा परबलेन कालवैषम्या-त्पराजितोऽपि भूपतिस्सांपरायिकात्परावर्तनमक्षात्रकुलोचितमुभय-त्राप्ययशस्करमिति मत्वा रणे हतश्चाभिमुखस्सुरयुवतिकरकमला-मुक्तकल्पतरुकुसुममालालङ्कृतो नन्दनवनमलञ्चकार । तदनु शत्रु-भिराक्रान्ते च राज्ये अशरणा मे जननी विहाय नगरं, पलाय्य बहुदूरं, कञ्चन भूसुरमवाप शरणम् । भूसुरोऽपि महात्मा धार्मिकः । तत एवाहमक्षराण्यभ्यस्यम् । यथा मे वयस्तथा ज्ञानमपि ववृधे । कदाचिदहं राजपुत्र इति सगर्वं व्यचिन्तयम् । अनुपद-

मिदानीं किमनेन यातयामेन विचारेणेति परित्यज्य तादृशीं चिन्तां विद्यार्जनायैवायतिषि । गच्छति काले साऽपि पतिपरायणा मे जननी पतिसायुज्यमवाप । तदनु विपुलेऽपि जगत्यस्मिन्मदीय इति न कोऽप्यास । अहमस्म्येककस्संसारसागरे निपतितः । विद्याऽपि तावत्येव परिसमापिता । उन्मत्त इव देशेदेशे पर्यटम् । एवमेव परिभ्रमन् कमपि परिव्राजमवालोकयं प्रथमम् । ततश्च भाग्यवशात्केनापि महाभागेन समगंसि । स किल मानवरूपधारी साक्षात्परमेश्वरः । स च महाभागः नानादेशानटन् दर्शंदर्शं प्राणिजातं निखिलमपि सांसारिकं वृत्तमसारं मत्वा नैष्ठिकस्संवृत्तः । तस्याहमभूवमन्तेवासी । स च नानाविधान् धर्मान्व्याख्याय क्रमेण निष्कामे कर्मणि मां न्ययोजयत् ; संसारवागुरातः न्यवर्तयच्च । ततःप्रभृति द्वन्द्वातीत इव विचरामि । संसृतिवासनाऽपि स्मृतिपथाद्दूरीबभूव । अत एवाहमिदानीमिष्टदेवतायाः पूजया मन्त्रपुरश्चरणेन च कालं नयामि । नान्यदस्ति वरिष्ठमितोऽपि । नानादेशान्पर्यटन्निमामरण्यानीमध्यगाम् । अस्मादृशयोग्यमिदमेव स्थानमिति कमपि कुटीरमत्राकल्पयम् । अतिक्रामति काले कदाचिदिमां देवतामूर्तिं मन्त्रबलेनैव साक्षादकरवम् । अभावयं च " मदनुजिघृक्षयैवात्र सन्निहिता जगद्धात्री " इति । तदाप्रभृति तामेवार्चयन्नत्र निवसामि । अयमास्माकीन उदन्तः ॥

" अयि ! साधो ! पर्यालोचय । सांसारिकं दुःखं केन वा

नानुभूतम् ? । त्वत्तोऽपि किमु न्यूनमास्माकीनं दुःखम् ? । तद्विस्मर संमृतिवार्ताम् । प्रत्यहमर्चय देवीम् । जप सततं मन्त्रान् । सश्चिनु धर्मं परलोकपाथेयम् । परस्तादपुनरावृत्ति पदं यास्यसि ” इत्युपदिश्य ऋषिर्मौनमुपागमत् ॥

—* इत्यष्टमः *—

— परिच्छेदः —



## नवमः परिच्छेदः

— दस्युगेहे शैवलिनी —

गज इव बहुदोषो मार्दवेनैव बाह्यः ॥

( पञ्चरात्रम् )

आसीन्मन्दाकिनीतीरे काऽपि ग्रामटिका दस्यूनाम् । तत्र केचन दस्यवः कुटीरान्परिकल्प्य न्यवसन् । अयं च विषयः प्रतापसिंहस्य । अतस्तस्मै वार्षिकं कमपि करं व्यतारिषुः । क्रमशश्चोराणां संख्या भूयसी बभूव । ततस्तस्या ग्रामटिकाया वीरपुरमित्यन्वर्थं नामाप्यभूत् । प्रतापसिंहोऽपि तेभ्यो नितरां बिभाय । दस्यवस्तु राजद्रोहाय नायतन्त । आसीच्च दस्यूनामाधिपतिः करालतुण्डो नाम । स किल वर्णेन कालरात्रिः, आकृत्या खर्वः, शरीरेण पविः, अंश इव कृतान्तस्य, सहोदर इव पापस्य, सार इव कलिकालस्य । बभूव तस्य च शिरसि लम्बमाना पिञ्छिका । प्रादेशमात्राः प्रखराः कुटिलाः केशाः । कोटरकल्पं नयनयुगम् । किं बहुना ? मध्यमलोके नियुक्तःसाक्षाच्चित्रगुप्त इवास । वीरपुरे चास्यागारमेव सर्वतोऽपि वरिष्ठम् । केवलमस्यैव पञ्चषाणि विपुलानि मृन्मयानि गृहाण्यासन् । अत एवास्य महद्गेहमिति प्रथाऽप्यवर्तत । तत्र कस्मिंश्चिद्गृहे लक्ष्म्याः पूजाऽपि प्रत्यहं प्रावर्तत । राजपथस्य पार्श्वत एव वंशनिर्मिता काऽप्यट्टालिका । तत्र च काऽपि सुरयुवतिरिव शापभ्रष्टा तरुणी

काममनारतं चुक्रोश । प्रतिक्षणमाकुलोके राजपथं शरणं गन्तुम् । महाशयाः ! सैवेयं शैवलिनी विरौति पिञ्जरबद्धा शुकीव ।

करालतुण्डः प्रलोभ्य शैवलिनीं परिणेष्यामीत्यमंस्त । कश्चित्कालमतिवाह्य तदीयं गृहमाजगाम । तदाऽपि रोरुद्यते युवती । तामेनामालोक्य भग्नाशस्संवृत्तः । तदनु समीपमेत्य मन्दमन्दमलपत्, " हरिणाक्षि ! किमित्यनारतं रोदिषि ? न किञ्चिदपि ते पश्यामि शोकनिदानम् । यन्मामकीनमिदं धनकनकरत्नादिकमैश्वर्यं तदखिलमपि त्वदायत्तम् । यदि निपतन्ति सकृदपि वा तरङ्गितास्तावका अपाङ्गास्तदा किलायमक्रीतदासस्तव पदकमले परिलुठति । इदमेकमेव संप्रत्याशास्यम् । क्षुद्रमिदमास्माकीनं गृहं त्रिभुवनमोहिन्यास्तव रूपप्रभया समुद्भासितं स्वर्गादपि गरिष्ठम् जातम् । अयि बाले ! साधु विचिन्तय । यदि नाङ्गीकरोषि मे प्रार्थनां, तर्हि कूटेन बलाद्वा साधयामि स्वमभिलषितम् । अहं किल करालतुण्डः । न मामसमर्थं जानीहि । मन्नामकीर्तनादेव सर्वेऽपि बिभ्यति । किं बहुना ? प्रतापसिंहोऽप्यास्माकीनो राजा सर्वदा शङ्कित एव वर्तते । अथवा संप्रति किमनेन वाचां विसरेण ? सावधानं विचार्य देहि मे सदुत्तरं, यथा बलात्कृता पश्चान्नैषि महतीं व्यथाम् " इति ॥

करालतुण्डमवलोक्यैव शैवलिनी मृत्युमिवागतं मेने । यदा तादृशमपि वचनमशनिपातं पपात कर्णयोस्तदा गतजीवितेव बभूव । अजनि नयनयोरतिमहती बाष्पवृष्टिः । शैवलिनी पुनर्मनसा भगवन्तमनाथरक्षकमभ्यासीत् ।

हा ! कृष्णद्वारकावास ! क्वासि यादवनन्दन ! ।
इमामवस्थां संप्राप्तामनाथां किमुपेक्षसे ॥

इति, व्यचिन्तयच्च यद्यहमधुना कटुवचनमालपामि, तर्हि नियतमयमुन्मत्तः खलमतिर्बलात् दूषयति । तदधुना प्रथम एव साधीयानुपायः इति । तदनु समन्दहासं जगाद " दस्युराज ! अहमद्य सानुनयं याचे । जहीहि माम् । विना ह्यपराधलवेनाबलां भ्रंशयितुं न ते साम्प्रतम् । धर्मे कुरु मतिम् । न किञ्चानेन सदृशमस्ति जगतीतलेऽन्यन्महापातकम् । अस्य च फलं रौरवादिनरकानुभव एव " इति ॥

वार्तामेतामाकर्ण्य दस्युपतिस्साट्टहासमवादीत्, " मञ्जुभाषिणि ! किमहं सामित्पाणिरागत्य तवाभ्याशं शुश्रूषुरस्मि ? अयि मुग्धे ! तृणाय मन्ये तव धर्मम् । तन्द्रालूनां हि धर्मः ; नास्मादृशानां शूराणाम् । अयि धर्मग्रहग्रस्ते ! शृणु राद्धान्तमास्माकीनस्य शास्त्रस्य; परहिंसा, परस्वहरणं, परदाराहरणं, सुरापानं, मृगया, मांसाशनं, स्वेच्छाविहरणं इति बहूनि सन्ति रहस्यानि । नायमवसरश्शास्त्रविचारस्य । तदधुना सदुत्तरेण शिशिरीकुरु मे मानसमसमशरकदर्थितमञ्जसा " इति । तदेतदकरुणस्य दस्योर्वचनमाकर्ण्य शैवलिनी व्याजहार, " ननु दस्युराज ! भवतु । सम्प्रति वरमेकं देहि । पश्चात्तव मनोरथं वर्धयामि " इति । स च कामान्धस्सानन्दं व्याजहार, " कामं वरय वरम् " इति । साऽप्यवादीत् " इतो मासद्वयं तूष्णीं भव । तावन्तं कालमहं किञ्चित् व्रतमाच-

रामि । अवश्यं च तस्मिन्भवति ते श्वश्रेयसम् ” इति ॥

वाचमेतामाकर्ण्य करालतुण्डः ‘ दृष्टमात्रेण न किमपि वशीभवति । कालोऽपि चपलः । निमेषमात्रेण प्रयाति । भवतु मासद्वयात्परं हस्तगता भविष्यत्येव ’ इति विचिन्त्याब्रवीत्, “ शैवलिनि ! तथैव भवतु । त्वमपि स्थिरप्रतिज्ञा भव ” इति । तदनु कृतकृत्यमिवात्मानं मन्यमानो जगाम गेहम् ।

ततः कंचित्कालं शैवलिनी निश्शङ्कमास । किन्तु तस्या मनसि महती चिन्ता प्रादुरासीत्, ‘ यदि मासद्वयादर्वाङ्न कमपि शरणं प्राप्नुयां, तर्हि किमाचरितव्यम् ’ इति । एवं चिन्तयन्त्या वदनं पाण्डुतां जगाम ; अङ्गानि कार्श्यमवापुः । एतस्मिन्व्यतिकरे दैवात्कोऽपि मुनी राजपथे गच्छन्नवालोकि । यान्तं तमवलोक्य शैवलिनी संज्ञया समाह्वयत् ; सबाष्पनयनं न्यवेदयच्च, “ महात्मन् ! भवानद्यानाथाया मे पिता । कन्या चाहं भवतः । सम्प्रति दस्युहस्तान्मोचय वा मां, अहोस्विच्छाणिमस्त्रं वा देहि । ततो मनोगतं दुःखं निवारयामि ” इति । तदेतदाकर्ण्य मुनेरपि हृदयं द्रवीभूय बाष्पव्याजेन बहिर्निर्जगाम । स च सानुकम्पमुवाच, “ वत्से नाम्ना काऽसि त्वम् ” इति ।

शैवलिनी—मन्दभागिनी शैवलिनी.

मुनिः—वत्से ! शैवलिनि ! अवश्यमुद्धरामि त्वामापत्सागरात् । किन्तु सहस्व कियन्तं चित् कालं मीलयित्वा विलोचने । इतः प्रभृति सन्त्यज्य सकलमप्यात्मनीनं कार्यं तावकं सन्तरणोपाय-

मेव चिन्तयामि ॥

शैवलिनी—पितः ! दस्युपतिः मह्यमदान्मासद्वयमेवावधिम् । तदन्तरेव यदि मामुत्तारयति भवान्, तर्हि चतुरश्रं भवेत् । नो चेत्सकलमपि विफलं भवेत् ॥

मुनिः—वत्से ! जहाहि चिन्ताम् । प्रतिभूरहमुत्तारयितुम् । चिन्तयस्व नारायणमनारतमापन्नार्तिहरम् । स किल त्राता कृत्स्नस्य लोकस्य । तवापीदं क्रन्दनमस्य श्रुतिसरणिमुपगतमेव । नियतं त्वामुद्धरिष्यति । शुभे ! पुनरहं द्रुततरमायामि । निश्शङ्कमास्व ॥

शैवलिनी—मन्दभागिनीमिमां न कदाऽपि विस्मरतु भवान् ।

मुनिः—वत्से ! मा बिभिहि

—* इति नवमः परिच्छेदः *—



## —:* दशमः परिच्छेदः *:—

### — प्रासादः —

सचन्द्रतारं प्रपतेदिहाम्बरं मही सशैला सवना नभो व्रजेत् ।
महोदधीनामुदकं क्षयं व्रजेत् महर्षयस्स्युर्न मृषाभिधायिनः ॥
(दिव्यावधानम्)

आसीन्निखिलनरपतिसमभिनन्द्यमानवैभवः निजपराक्रमविजितनिखिलसामन्तचक्रः समभ्यर्चितभूसुरः समाराधितसुरो नयपरतन्त्रःसिंहासनाधिपतिः सिंहपुरे सिंहो नाम । तस्य किल तनूभवः प्रतापसिंहः । उपरते पितरि प्रतापसिंहः पित्र्यं सिंहासनमलञ्चकार। प्रतापसिंहोऽपि पराक्रमेण साहसेन रणनैपुण्येन च पितुरन्यूनो बभूव ; अनितरसुलभानां दयादाक्षिण्यादीनामपि शोभनानां गुणानामाकरश्चासीत् । तथा पुत्रनिर्विशेषमशिषत्प्रजाः, यथा मुक्तकण्ठमाम्रेडयेयुर्निखिला अपि रामराज्यमिदमिति ॥

कदाचिदन्तः पुरे नरपतिर्निखिलललनाललामायमानया कान्तया साकमिन्दुमत्या सामोदं हंसतूलिकातल्पमध्यास्त । तदा तत्र ननृतुर्वारयुवत्यः ; अगायन्गायकाः ; वैणिकाः परं परिवादिनीरवादयन्त । एवमानन्दतुन्दिले समये काऽपि चारुशीला नाम प्रतीहारी राजसमीपमेत्य सविनयमावेदयामास, " कोऽपि महात्मा मुनिर्महाराजं दिदृक्षुरागच्छति " इति । श्रवणसमनन्तरमेव

राजा सस्मार रमानन्दस्वामिनः ; अब्रवीच्च प्रतीहारीं, "चारुशीले ! अयमहमागतः । द्रुतं प्रद्रुत्य ऋषये कौशमासनं देहि" इति । सा च "यथाऽऽज्ञापयति महाराजः" इति जगाम । तदनु नरपतिरलपत्प्रेयसीं, "अयि ! प्राणेश्वरि ! अलमधुनाऽनेन विनोदव्यापारेण । महर्षिः किल प्रतीक्षते । महतामागमनावसरे नैतत्सांप्रतम्" इति ॥

इन्दुमती—प्राणेश्वर ! भवान्सर्वदा राजसभायामेव वर्तते । अहङ्किल मन्दभागिनी सम्प्रत्येव कथञ्चिदवकाशमुपलभ्य भवता सह मनोविनोदनायायतिषि । परसौभाग्यासहेन हतविधिना तदपि न सोढम् । नाथ ! 'नेदानीं दर्शनावसरः ; कल्य एव भविता' इत्यावेद्य विसर्जय ऋषिम् ॥

प्रतापसिंहः—प्राणेश्वरि ! विसर्जनीयः किमृषिः ? हन्त ! क्षत्रियकन्यायाः क्षत्रियपरिगृहीतायास्तवापि वदनकमलात्कथमीदृशी वाणी निरर्गलं निर्गलति ? प्रियतमे ! नावमन्यस्वाग्रजन्मानम् । नायं साधारणः । महर्षिः किल विग्रहवान् धर्म एव । विप्रकृतश्चेत् क्षणादेव विश्वमखिलमप्युपसंहरेत् । किञ्च तादृशानां दर्शनं, विना भाग्येन, न कदाऽपि सम्भवेत् । तादृशा यदाऽऽगच्छन्त्यास्माकीनं कुटीरं, तदा किल सकला अपि देवताः प्रसीदेयुः । अनितरसुलभा भाग्यपरम्पराऽपि समुपनमेत् ॥

इन्दुमती—नाथ ! क्षमस्व अङ्गनाजनसुलभामविमृश्यकारिताम् । अपि नाम तादृशस्य महर्षेर्दर्शनमीदृश्या मन्दभागिन्या

अपि भवेत् ? ॥

प्रतापसिंहः—प्रिये ! तव कथन्नाम भवेत्तदीयं दर्शनम् ? । किल स महात्मा सम्प्रति सभायां वर्तते । तत्र कथमन्तःपुरवध्वाः प्रवेशस्सम्मतस्स्यात् ? ॥

इन्दुमती—प्रियतम ! तर्हि स माहात्मा कुतो वा नात्र समानीयते ? । ऋषीणामन्तःपुरप्रवेशे न कमपि दोषमुत्पश्यामि ।

प्रतापसिंहः—साधु ! भवत्वन्यदा । इदानीमहं तत्रैव यामि ।

प्रतापसिंहस्ततः प्रस्थाय सभां प्रविश्य ददर्श । स महात्मा ऋषिः कौशमासनमध्यास्त । तस्य वदनमण्डलं किञ्चिदिव म्लानमवर्तत । तदवलोक्य नूनं विलम्बितं मयेति मुनिः क्रुद्ध इति विभाय । तदनु भीतभीतस्तदन्तिकमेत्य सपदग्रहणं प्राणंसीत् । ऋषिः " जय ; विजयी भव " इत्याशिषमकरोत् । ततो नरपतिस्तपस्विनः पार्श्वे सविनयमुपविश्य जगाद, " महात्मन् ! धन्योऽस्मि । फलितं मे सुचरितम् , यद्भवतां सुकृतिमात्रलभ्यं सन्दर्शनमुपनतं पङ्कोरुपरि गङ्गाप्रवाह इव " इति ॥

रमानन्दः—महाराज ! कस्मैचित्कार्याय तावकं साहायकमपेक्षितम् । तदर्थमेवाहमत्रागतः ॥

प्रतापसिंहः—मुनिवर ! भ्रूक्षेपमात्रव्यापारणीये किमियता वचनविस्तरेण । तदाज्ञापयतु कामम् ॥

रमानन्दः—महाराज ! वीरपुरं नाम नगरं कस्मिन्नायत्तम् ?

प्रतापसिंहः—अस्मिन् भवतां प्रकिङ्करे ।

रमानन्दः—तत्रत्याः किमभिज्ञायन्ते दस्यवः ?

प्रतापसिंहः—न नाम्ना सर्वेऽपि, किन्तु करालतुण्ड इति तत्र कोऽपि वर्तते । स एव दस्यूनामधिपतिः । सोऽप्यस्मदधीनः ।

रमानन्दः—स किल दस्युपतिः कस्यापि माननीयस्य महात्मनस्तरणिं विनाश्य ततः काञ्चन सुन्दरीं तरुणीं बलात्स्वनगरमानिनाय । अहमपि वीरपुरादेवागच्छामि । सा किल तरुणी राजमार्गे यान्तं मामालोक्य साश्रुनयना जगाद, " तात ! मामुत्तारय विपदम्बुधेः । मासद्वयं यावदवधिर्वर्तते, अत्रान्तरे यदि नोद्धरेत भवांस्तर्हि सर्वं विफलं भवेत् " इति । तामेतामाकर्ण्य वाणीं तवाभ्याशमहमागनः । यथा तपस्विनी सा बाला निराकुला भवेत्तथा त्वया विधेयम् ।

प्रतापसिंहः—महात्मन् ! सम्प्रति कति सन्ति करालतुण्डस्य वशे दस्यवः ।

रमानन्दः—महाराज ! बहवो वर्तन्ते । प्रायः परस्सहस्रास्स्युः । किमनया संख्यया ? " यतो धर्मस्ततो जयः " इत्यार्षवचनं न कदाऽपि वितथं भवेत् ।

प्रतापसिंहः—तुरीयमन्तरणोपायं न किमपि सेत्स्यति । तदधुना विसर्जयामि लेखं करालतुण्डाय ।

रमानन्दः—प्रथममावेदनमेव युक्तरूपम् ।

प्रतापसिंहः——महर्षे ! भवदाज्ञा शिरसा धृता । कल्य एव प्रेषयामि लेखम् ।

रमानन्दः——मासद्वयादर्वागेव सङ्गरस्समाप्यः ।

प्रतापसिंहः——यथाऽऽज्ञापयति भवान् ।

रमानन्दः——तर्हि यामि ; न विस्मर ।

प्रतापसिंहः——न कदाऽपि विस्मरामि ; यथाभवदादेशमाचरामि च ।

—:* इति दशमः परिच्छेदः *:—



## एकादशः परिच्छेदः

—: लेखः :—

को वा न सिध्यति करोति ममेति कार्यम् ।
" अविमारकम् "

अन्येद्युः प्रातरेव प्रतापसिंहस्सेनाध्यक्षमाहूयादिदेश, " नेतः परं विलम्बितुमुचितम् । किमिदानीं विधेयम् ? सत्वरमादिदय " इति । ततस्सेनानीस्सविनयमावेदयामास, " महाराज ! अद्य प्रहिणोतु पत्रमत्रभवान् । तेन यदि विनीतो न भवति दस्युपतिः, तर्हि सिद्धमेव रणकण्डूलं यौष्माकीणं बलम् " इति । राजा तथेति पत्रं व्यलिखत् ॥

करालतुण्ड ! सिंहपुरात्

लेखमुखेन ज्ञापयामि । आस्माकीनेऽपि विषये निवसन्दस्युवृत्तिमतितरामाचरसि । ईदृश इति प्रथममेव यद्यज्ञास्यं, तर्हि व्यद्रावयिष्यम् । किमिदानीमतिक्रान्तेन विचारेण । अद्याहमश्रौषं ' कस्यापि माननीयस्य नौकां परिलुण्ठ्य तस्याभिरूपां तनयामपाहरः ' इति । तदिदानीं पत्रावेक्षणानुपदमेव सुशीलां तां बालां नार्पयसि चेत्सिद्धमेव नः परस्सहस्रं बलमाहवाय । अलमतो वाचां व्ययेन ॥

इति
प्रतापसिंहः

कमपि जङ्गालं दूतमाहूय पत्रं तत्करे प्रदायादिक्षत्, "लेखवाह ! अद्यैव द्रुतं पलाय्य वीरपुराधिपाय करालतुण्डाय देयम् । अनुपदमुत्तरञ्चानेयम्" इति । दूतोऽपि यथानिर्देशं वीरपुरमुपेत्य करालतुण्डायादिशल्लेखम् ॥

करालतुण्डः—रे ! कुत आयातः ?

दूतः—सिंहपुरात् ।

करालतुण्डः—को नाम प्रादाल्लेखमिमम् ? ।

दूतः—सिंहपुराधीशः प्रतापसिंहः । दस्युपते ! पत्रपाठनान्निखिलं विदितं भवेत् ॥

करालतुण्डः पत्रमुन्मुच्य पपाठ ; अनुपदं व्यचिन्तयच्च, 'किमिदानीं रम्भोर्वशीप्रमुखसुराङ्गनागर्वसर्वङ्कषा तरुणी परित्याज्या, आहोस्विन्नियतपतनाः प्राणाः परित्याज्यास्सङ्गरे' इति । ततश्चिराय निश्चिकाय 'युवती परं न कदाऽपि देया । भवत्वायोधनमेव । युद्धे जयपराजयावस्यैवेति न केनापि निर्णेतुं शक्यते । दैवात्कुतो ममैव न स्यात् जयः ? अथ वा तस्यैवाऽस्तु । किन्त्वस्याः कृते समरे शरीरनाशोऽपि साधिष्ठ एव मे' इति ॥

तदनु दूतः किमुत्तरं लेखस्येत्यप्राक्षीत् । करालतुण्डः प्रत्युत्तरमलिखत् ॥

महाराज ! प्रतापसिंह ! वीरपुरात्

यथाभिमतमाचर । नाहं दास्यामि तरुणीम् । अनर्थम-

श्रुतदृष्टचरं त्रिभुवनस्पृहणीयं रत्नं दैवादुपलभ्य किमुन्मत्तोऽप्यगाधे पारावारे निक्षिपेत् । यद्यभिलषसि जन्यं, तर्हि यथाशक्ति परीक्षे तावकं बलम् ॥

इति आवेदयिता
करालतुण्डः

पत्रं चैतद्दूतहस्ते प्रदाय व्यसर्जयत् । ततस्सेनाध्यक्षाना-कार्य प्रत्येकमाज्ञापयामास, " भवन्तः किल सर्वेऽपि सतूणीरा-न्बाणान् धनूंषि मुद्गरान् करवालिकाः खड्गान् परिघान् भल्लान् परश्वधान् प्रासान् दण्डान् अन्यानप्यायुधनिकरानादाय सिद्धा भवन्तु समराय सावधानाः । सर्वतस्सहैव भेरीनिनादेन जोघुष्य-तामादेशः " इति ॥

सर्वेऽपि सेनाध्यक्षाः " यथाऽऽज्ञापयति स्वामी " इति स्वे स्वे कर्मणि व्यापप्रुः । वीरपुरमखिलं वीरत्रोपणाभिरापूरि ।

सा किल तपस्विनी शैवलिनी वार्तामेतां नाणुमात्रमप्य-जानात् ॥

—:* इत्येकादशः परिच्छेदः *:—



# द्वादशः परिच्छेदः

—: तुसुलम् :—

—*—

अहस्समुत्तीर्य निशा प्रतीक्ष्यते
शुभे प्रभाते दिवसोऽनुचिन्त्यते ।
अनागतार्थान्यशुभानि पश्यतां
गतं गतं कालमवेक्ष्य निर्वृतिः ॥

( प्रतिज्ञायौगन्धरायणम् )

हन्त ! चिन्तयन्त्या तपस्विन्या, शैवलिन्या कति दिनानि नातिवाहितानि ? कति वा पक्षाः ? कति वा मासाः ? कीदृशी विपदापतेत् ? इति न किल ज्ञायते । दस्युपतिना सङ्केतितः कालश्च समतीतः । तथाऽपि तस्यास्तादृशी दुर्दशा परं न केनाप्युत्सारिता । सा च स्मारंस्मारं दस्युपतिवचनं नितरां चकम्पे ; व्यचिन्तयच्च ' अद्य दस्युपतिरागच्छति । किं कर्तव्यम् ? स किल खलमतिः । नेतःपरं शृणुयात्सान्त्वनाम् । कः खलूपायः ? हा ! महात्मनस्तस्य महर्षेः पादयोः पतित्वा न्यवेदयम् । तथाऽपि मन्दभागिन्याः कृते नैतावता कालेन न किञ्चिदप्याचरितम् । तत्रापि नूनं मामकं दौर्भाग्यमेव निदानम् । अन्यथा तादृशोऽपि परदुःखापनोदव्यसनी किमुदासीन ? ' इति ॥

दस्युपतिराजगाम शैवलिन्यास्समीपम् । तदाऽपि सा पांसु-

परिधूसराङ्गी साश्रुनेत्रा भूतले निपत्य मुक्तकण्ठं क्रन्दति स्म। हन्त ! कुत्र वाऽद्य शैवलिन्यास्तादृशं लावण्यम् ? कुत्र वा तादृशी मनोहारिणी मूर्तिः ? अनारतमाक्रन्दनेन विनिन्दितारविन्दं वदनमपि कालिमानमवाप। तस्यास्तादृशीं दशामालोक्य दूनः करालतुण्डः प्राह स्म, " प्रिये ! यथानिर्देशमेतावन्तं कालं पर्यपालयम्। अद्य वा पूरय मे मनोरथम् " इति। इयङ्किल वाणी रोरुद्यमानायाश्शैवालिन्याः गण्डस्योपरि पिटका संवृत्ता। बाष्पादिग्धकण्ठी जगाद, " अयि ! दस्युराज ! यद्यपि माम-कीनामेकां प्रार्थनां पर्यपूरयः। अद्यापि यद्यपरा काऽपि प्रार्थना परिपूर्येत, तर्ह्यस्माद्दुःखादात्मानमुद्धरेयम् " इति। तदनु दस्यु-पतिरुवाच, " प्रिये ! अद्य पुनरपरा का ते यन्त्रणा ? नाद्यापि तव वदनारविन्दादानन्ददायिनी वचस्सुधा प्रसरति। सुमुखि ! प्रसीद। नातः परं निर्बध्नामि। अखिलमिदमैश्वर्यं त्वदायत्तम्। किं बहुना ? अयमपि ते भ्रुकुटिकिङ्करः। प्रिये भवतु। अपरा कीदृशी ते प्रार्थना ? ब्रूहि दास्यामि " इति॥

शैवलिनी—तर्हि सत्यवचनमाख्याहि।

दस्युपतिः—सत्यं सत्यं सत्यं दास्यामि।

शैवलिनी—दयालो ! महच्चमेकं शाणितमस्त्रं देहि। न चेत्सर्षपमात्रं विषं वा देहि। तत एव मे सर्वाऽपि विपद्भस्मसा-द्भवेत्॥

दस्युपतिः—हा प्रतारिणि ! किमियमेव वा तवाभ्यर्थना ? किमस्या एव कृते त्रिस्सत्यवचनमलब्धाः ? आत्महत्या क्रियते किम् ? तर्हि सत्यात्परिभ्रष्टोऽहम् । न ते किमपि दास्यामि ॥

आः ! दुश्शीले ! एतावन्तं कालं प्रतीक्षितवतो मे किमिदमेव प्रतिफलम् ? पण्डितम्मन्ये ! साधु विचिन्तय ' किमिदमुत्तरं तव युक्तरूपम् ? तावकीनामभ्यर्थनामहमङ्ग्यकार्षं किल । त्वं तु नाङ्ग्यकरोः । यदि त्वमपि सत्यसन्धा, किं तवेदृशी विपदापतेत् ? नास्ति मय्यपराधलेशोऽपि । तदधुना तूष्णीं परिगृहाण मे पाणिम् । न चेद्यथेच्छसि तद्भवतु " इति ॥

ताद्दशीं हालाहलकल्पां वाचमाकर्ण्य विप्रकृता पन्नगीव सामर्षं सधैर्यं च सा जगाद, " धिङ्मूर्ख ! निर्लज्ज ! पाप ! दुर्ललित ! निर्घृण ! नाहमिदानीं शैवलिनी । किन्तु तावकप्राणपवनपानाय पिपासिता कालभुजगी । धिग्जाल्म ! कुलपांसन ! दुरात्मन् ! दूरमपेहि । तिष्ठमा पुरः । न चेदाकर्णयसि मे वचनं, तर्हि सदृशं फलमवाप्स्यसि " इति । दस्युपतिस्ताद्दशं वचनमाकर्ण्य भूयस्तरां जज्वाल कोपानलपरीतः । भूताविष्ट इव प्रतिपत्तिमन्थरः शैवलिनीं ग्रहीतुमुदयुङ्क्त । शैवलिनी पुनरात्मनीनं चारित्रं त्रातुकामा पुलिन्दकार्मुकपरिभ्रष्टशरसंपातचकिता हरिणीव प्रदुद्राव । सोऽपि दुश्शीलस्तामनुप्राद्रवत् ॥

अस्यामवस्थायां पश्चात् ढुम् ढुमिति प्रलयघनघटागर्जित-

कल्पः स्फोटयन्निव कर्णकुहरं कोऽपि ध्वनिः अश्रावि । तदेतदाकर्ण्य दस्युपतिश्चकम्पे । शैवलिन्यपि विभाय । किञ्चिद्दिवोभावपि तूष्णीमास्ताम् । पुनरपि द्रुम् द्रुमिति तादृश एव ध्वनिरश्रावि; विश्वतश्च वीरघोषणाः । स च दस्युपतिः , 'प्रतापसिंहस्य बलमास्माकीनं पुरमावृत्य विश्वतो वृहन्नलिकान्युपयुनक्ति ' इति मन्वानः परित्यज्य शैवालनीं, ततस्सोच्छ्वासमुच्छुष्कतालु प्राद्रवत्; अविलम्बितं सेनापतींश्च समाहूय ससैन्यान्प्रथमं प्राहिणोत् ; मनसा व्यचिन्तयच्च, 'अहो ! नेयं शैवलिनी । किन्तु काऽपि पुरुषादिनी । भवतु युद्धात्प्रतिनिवृत्य तां पिष्टपेषं पेषयामि कुलघातिनीम् ' इति ॥

तदनु तदपगमाच्छैवलिनी किञ्चिदिव प्रकृतिमापेदे । युद्धकोलाहलं च समाकर्ण्य पर्यालोचयत्, 'सर्वमिदं महर्षेः कार्यम् । नूनं स एव महात्मा युद्धाय कमपि प्रबलं भूपालं न्ययोजयत् । यद्यभविष्यन्निमिषमात्रमद्य विलम्बः,तर्ह्यापतिष्यन्मे महती विपत् । यदि च तेन पापात्मना ममेमान्यङ्गान्यस्पर्क्ष्यन्त, तर्हि नाधारिष्यन्त ' इति ॥

अन्यतः प्रादुरासीद्रोमहर्षणं तुमुलम् ॥

—:* इति द्वादशः परिच्छेदः *:—



## —+:* त्रयोदशः परिच्छेदः *:+—

### —÷ खड्गाखड्गि ÷—

—*—

अमाध्यमन्यथा दोषं परिमार्ष्टुं शरीरिणः ।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्भविष्यति ॥

( महावीरचरितम् )

"उपसर्पतोपसर्पत; गृहीतगृहीत; हतहत ;" इत्यनवरत कोलाहलं द्वयोरपि सैन्ययोरतिमहदाविरासीज्जन्यम् । अन्योन्यं पर्यैक्षन्त पराक्रमं सैनिकाः । तादृशे समये कुत्र प्रतापसिंहः ? स किल महासत्वः करे कलयन् खड्गं, तत इतस्समीक्षते स्म ; नादर्शयदात्मनीनं पौरुषं सैनिकेषु; केवलं करालतुण्डाय प्रतीक्षाञ्चक्रे । स तु तदानीमपि नाययौ । पर्यालोचयत्प्रतापसिंहः, 'किमयं दुरात्मा करालतुण्डः कुत्रापि पलायामास । आ ! कुत्र वा पलायते वराकः ? आस्माकानि बलानि वीरपुरं परितः वृतिरिव परीतानि किल' इति ॥

तदा दस्युपतिः शैवलिन्यास्समीपमध्यास्त ; युद्धकोलाहलमाकर्ण्य ततः पलाय्य सैनिकान् प्रथमं प्राहिणोत् । ततस्स्वयमपि वीरपाणमासेव्य 'नमः प्रजापतये; नमः सर्वसिद्धेभ्यः; प्रसीदन्तु बलिशम्बरमहाकालाः । लयं गतास्सर्वविघ्ना भवन्तु । हताः परिपन्थिका भवन्तु । सफलास्सन्तु मनोरथाः' इत्यनुसन्धाय च रणा-

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



ङ्गणमवातरत् । तदागमनमवलोक्य प्रतापसिंहः करालतुण्डमाचक्राम । यथा किल वन्यो भीमकायः शार्दूलः कमपि मध्येवनं हरिणमालोक्यानुपदं प्लवमानस्समाक्रामति, यथा च क्षुधार्तः पञ्चास्यः परिपतत्याभिमत्तेभकुम्भं, तथा तमाक्रम्याहोपुरुषिकया जगाद, "रे नराधम ! पापिष्ठ ! खलमते ! आस्माकीनेऽपि विषये निवसन्नेवमकार्षीः किल । कीदृशी तव धृष्टता ? कामपि मान्यामबलां बलाद्वशयितुमिच्छसि । रे ! दुरात्मन् ! तत्तावकं गात्रमिदानीमुद्पेषं पिनष्मि । रे रे ! खर्व ! अपि नाम जिगृहीपुरसि दिविस्थं चन्द्रमम् ? रे ! मण्डूक ! कालभुजगफणायां कथमुदेति निनर्तिषा तव ? पङ्गो ! उत्तुङ्गमचलं लिलङ्घिषुरसि । रे जाल्म ! पश्यतोहर ! तव तादृशीमाशालतां समूलमुत्पाटयामि निमेषमात्रात्" इति ॥

तादृशं साभिमानं वचनमाकर्ण्य दस्युपतिरातितरां चुकोप । नयनयुगमरुणिमानमवाप । अङ्गानि चकम्पिरे । सोऽपि तारतरं ललाप, "रे रे ! क्षत्रियाधम ! किमिति प्रलपसि ? यद्यस्ति तव भुजाबलं, तर्हि तूष्णीं प्रदर्शय । केयं विकत्थना ? किमियं क्षात्रकुलानुरूपा ? न कदाऽपि जन्यात्परावर्ते । नाहं भीरुः, नवा वाचाटः । प्रयोजय खड्गम् । किमिति तूष्णीं करे करोषि । नायं करस्यालङ्कारः । रे ! वीरम्मन्य ! प्रकाशय पराक्रमम् ; पश्यामः" इति ॥

आचष्ट पुनरपि प्रतापसिंहः, "किं बहुना । रे ! दस्यो ! यद्यस्ति जिजीविषा तव, तर्हि राज्यमिदमद्यैव परित्यज्य प्रद्रव ।

न चेन्नाहं मर्षयामि । सिद्ध एवाहं तव विनाशाय । किन्तु ममै-तत्प्रहरणमेव तृणाय मत्वा त्वामतीव लज्जते " इति । तदनु-जगाद दस्युपतिः, " रणाङ्गणात्पलायितुं नाहं पशुः; न वा विराटसूनुः । किमुक्तेन बहुना ? " दुर्बलस्य बलं गर्वः " इत्याभाणकस्त्वय्येव ननु सार्थः । रे ! मूर्ख ! तव नयनयुगमद्य समुमुत्पाटयामि । जागृहि । कथं जीवन्यास्यसि ? पश्यामि " इति । एवं वदन्नेव प्राहरत् खड्गेन । प्रतापसिंहोऽपि प्रत्यवध्नात् । उभयोरपि भीकरं प्रावर्तत खड्गाखड्गि जन्यम् । करालतुण्डः परं मेने, ' कदा प्रतापसिंहं परासुं कुर्याम् ' इति । प्रतापसिंहस्तु खड्गमाकृष्य प्राहरत् । हन्त ! दस्युपशुः कियन्तं कालं सिंहस्य पुरस्तिष्ठेत् । यथा ह्यभ्यग्नि शलभाः पतेयुः, यथा च नाविकः मध्येसमुद्रं पतितस्तीरमाधिगन्तुं विधायाऽपि महान्तं यत्नमन्ततस्तत्रैव प्राणांस्त्यजेत्, तथा दस्युपतिरपि खड्गेन हतः पपात धरायां तालपातम् ; तत्याज च जीवितं साकं दौरात्म्येन । विश्वम्भराऽपि व्यपगतभारेव बभूव । शैवलिन्याश्चारित्रमार्गे समारोपिता कण्टकवृतिरपि समुत्कालिता । प्रतापसिंहोऽपि महर्षेरन्तिके कृतात्प्रतिज्ञामागराटुत्ततार । रमानन्दः नितरां मुमुदे । तदनु सर्वेऽपि शैवलिनीमानेतुं दस्युगृहाय प्रतस्थिरे । गमनवेलायां महर्षेर्वाममाक्षि पस्पन्दे । तदवलोक्य तस्य हृदयमपि पस्पन्दे । अथापि ऋषिस्सधैर्यं जगाम; दस्युगेहमुपेत्य कवाटं चोद्घाट्य यदा प्रविशत्यन्तस्तदा का पि गृहगोधिका न न न नेति जगाद । प्राथमिकीं

विवेश कक्ष्याम् ; तदनु द्वैतीयीकं; ततश्च तार्तीयीकम् । शैवलिनी पुनर्न कुत्राप्यवालोकि । यत्र च प्रथममपश्यन्मुनिस्तत्रापि नास शैवलिनी । मुनिः नितरां शुशोच ; व्यचिन्तयच्च, ' अपिनाम शैवलिनी दस्युपतिना बलाद्वशयितुमारब्धा परितत्याज प्राणान् ? आहोस्वित् दुरात्मा स एव तां जघान ' इति । तदनु व्याकुलमानसः प्रतिन्यवर्तत ॥

यदा हि दस्युपतिस्सैनिकानां कोलाहलमाकर्ण्य भीतभीतः प्राद्रवदुद्घाटितमपि कवाटमविगणय्य, तदा किल शैवलिनी जयपराजययोरनियतत्वमूहमाना ततः पलायिष्ट । ' इतः परं या काऽपि वा विपदापततु कामं, तादृशीमपि सन्तरेयम् ' इति मत्वा गमनावसरे किमपि शाणितमस्त्रमादाय निरगात् ॥

—*: इति त्रयोदशः परिच्छेदः :*—





## —:*: चतुर्दशः परिच्छेदः *:—

### मध्येवनं शैवलिनी

दुद्दिणविणट्ठजोण्णा रत्ती वट्टइ निमीलिआकारा ।
( दुर्दिनविनष्टज्योत्स्ना रात्रिर्वर्तते निमीलिताकारा )

( बालचरितम् )

यदा किल शैवलिनी चोरगृहात्पलाय्य वनमाससाद, तदा दिवसोऽपि दोषाकरदर्शनपरिजिहीर्षयेव दूरं प्रदुद्राव । सहस्रकरोऽपि गतविभव इव कियत एव शातकुम्भकल्पान् करानुन्नतास्वपि शाखासु विकिरन्नासीत् । तदानीमपि विहगाः कुलायेष्वर्भकालिङ्गनसुखमनुभवितुं न प्रतिन्यवर्तन्त । समुत्कण्ठितः कलानिधिरपि नावाप प्रियतमायाः श्यामायाः स्वयंग्रहाश्लेषम् । गगनाङ्गणे नाविरासीत्तारकानिकरोऽपि । गावः किल सकला अपि वत्सतरीभिस्साकं पांसुपुञ्जव्याजेनारुणान्यम्बराणि परिधाय सविलासं गोष्ठाभिमुखं प्राययुः । सर्वोऽपि जनः सवयोभिरुद्यानपरिसरेषु व्यायामाय विचचार । युवानश्च सोल्लासं विलासिनीभिः सह सल्लपन्तः परिहसन्तः प्रमदवनेषु कुञ्जेषु च यापयित्वा कालं प्रतिन्यवर्तन्त ॥

यथा वासन्तिकेन पवनेन मन्दमदमूह्यमानः सायन्तनारुणजलदपटलः प्रसरति, यथा मरालगणः तनुतरतरङ्गपरिक्षुभिते सर-

सीजले सामोदं प्लवते, यथा च युवयुगलमन्योन्यमवलम्ब्य करकमलं सविलासं सानन्दञ्च सायन्तनसमीरणसेवनाय सञ्चरत्युद्यानपरिसरेषु, तथा शैवलिन्यपि चोरागारकाराविमोकादतीव परितुष्टा मध्येकाननमेकाकिनी जगाम। छायाद्रुमास्तदानीमपि घनान्धकारव्याजेन दस्युपतेर्हृदयमिव प्रकाशयामासुः। सा किल गामङ्गामं विवेश निविरीसं कान्तारम्। पवनोऽप्यन्ध इव सर्वतः स्वैरं परिपतन्ववौ। नीलाम्बरसञ्चारिणः पयोदाः घनान्धकारपरित्रस्ता इव सङ्घशः प्राद्रवन्नितस्ततः। तादृशे जनरवविहीनेऽपि कानने क्वचिद्विहगानां पक्षपुटपटपटारवः, कुत्रचिद्भूतलनिपतितपरिणतपत्रपुञ्जानामुपरिविचरतां क्रूरसत्वानां चरचरध्वनिः, कुहचित्कर्कशोपचक्रनिनदाध्मातो झिल्लीरवो वाचालयति नीरवमपि गहनम्। वात्यया प्रणुन्नाः श्यामा लताः पतित्वैव पादयोः,प्रयान्तीं शैवलिनीं 'इतःपरं मा याहि भयङ्करं काननं' इति बोधयन्त्य इव चरणयुगलमबध्नन्। साऽपि शैवलिनी सानुनयमेव ता लताः कराभ्यां स्पर्शस्पर्शमाश्वास्य प्रयान्ती ताभिरात्मानमतोलयदिव, 'यथा प्रबलपवनवशादाश्रयात्परिभ्रष्टा लताः पांसुपरिधूसराः पङ्किलाश्च परिलुठन्ति विश्वतः,तथाऽहमप्याश्रयहीना निरर्गलनिर्गलद्वाष्पासारपरिप्लुतपयोधरा कान्तारमध्ये जात्यन्धेवोन्मत्तेव च परिपतामि' इति ॥

क्रमेणाम्बरतलं नीलनीरदपङ्क्तिभिराकीर्णमतितरां रणरणकावहमासीत्। तदानीं शैवलिनी काननाभ्यन्तरात् द्रुतं परावर्ति-

तुमयतत । तादृशे समये शुश्राव पुरुषस्येव पादध्वनिं सहैव कण्ठस्वरेण । अनुपदं विश्वतश्चक्षुर्न्यक्षिपत् । केवलमन्धतमसे स्थूलस्थूलाः तरवः शाखाश्च तत्र तत्र चोरसङ्घा इवालक्ष्यन्त । ततः शैवलिनी सभयं सोर्ध्वश्वासश्च प्राद्रवत् । यदा किल पुरुषध्वनिरधिकाधिकं पपात कर्णयोः,तदा द्वित्रिः सौदामिन्यपि प्रास्फुरत् । साऽपि सौदामिनी वनान्धकारावृतं काननाभ्यन्तरं प्रवेष्टुं भीतभीतेव शाखास्वेवाग्रेव सकृत् स्फुरित्वा द्रुततरं प्रदुद्राव । तदा किल गाढान्धकारकवलिना रजनी । तत्रापि निबरीसं काननम् । तत्र चैकाकिन्यबला शैवलिनी । हा ! हन्त ! किङ्करोतु सा तपस्विनी? 'पुनरन्यः कोऽपि दुरात्मा दुरभिसन्धिरायाति किम्' इति शशङ्के । पुनरपि शैवलिनी चिन्तासागर एवापप्तत् ॥

हा ! हन्त ! कुहके ! चिन्ते ! नास्ति तव त्रिभुवनेऽप्यसाध्यं नाम । प्राणिमात्रमपि त्वदपाङ्गपात्रमेव । त्वं किल कुलटेव कति कति वा जनान्नालिङ्गितवती ? तदभिधातुमपि जिह्वा जिह्मेत्यास्माकीना । कति कति वा न तवाक्रीतदासा जगत्यासार्वभौममाकिञ्चनम् । तथा हि- धिक्कृतकुबेरस्यापि धनाभिवृद्धौ चिन्ता। अन्यस्य धनार्जने चिन्ता । अपरस्य पालने चिन्ता । परस्यापत्याभावे तत्प्राप्तौ चिन्ता । सत्यपत्ये पालनादौ चिन्ता । इतरस्य विद्यार्जने चिन्ता । अन्यस्य आर्जितायाः उपयोगे चिन्ता । हा ! हा !! विश्वरूपिणि ! विश्वगे ! चिन्ते ! किं बहुना ? त्वया विना न

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कुत्रापि कोऽपि निमेषमात्रमपि जीवति । कानि कानि वा न त्वया पिशाचिकाकल्पया कवलिता नोन्मत्ता बभूवुर्न वा परेताः ?॥

एवं सति निरङ्कुशे चिन्ताप्राभवे शैवलिन्यपि तपस्विनी तस्या एव कटाक्षपात्रतामयासीत् ; तदाऽप्यचिन्तयत् ‘ कुतो वाऽहमायाता मन्दभागिनी दस्युगृहात् । सतीत्वरिरिक्षिषा किल मामेवमकार्षीत् । तत्रैवाहं यद्यभविष्यं, दस्युपतिरप्यरातिना यद्य घानिष्यत, तर्हि नेदृशी विपदापतिष्यत ’ इति । तदनु किञ्चिद्वि धैर्यमवलम्ब्य—

अग्रतः पृष्ठतश्चैव पार्श्वतश्च महाबलौ ।
आकर्णपूर्णधन्वानौ रक्षेतां रामलक्ष्मणौ ॥

इति ध्यायंध्यायमनाथरक्षकं भगवन्तं वन्येन पथा जगाम । अकस्मान्मध्येमार्गं केषु चित्पादपपादेषु स्खलिता भूतले कदलीपातमवाङ्मुखी पपात ; निमेषमात्रान्मुमोह च । तदा किल न किञ्चिदपि ततान चिन्ता स्वमाधिपत्यं तत्र । तदनु मुहूर्ताभ्यन्तर एव कोऽपि पथिकः प्रदीपहस्तस्तेनैव पथा प्रयान्मध्येमार्गं पतितां विचेतनां वरवर्णिनीं नामालोक्य नितरां विसिष्मिये । ततस्सकरुणं तदेतच्छलनारत्नं निनाय स्वमावासम् । तत्र च परिचारिकास्तस्याश्शुश्रूषायै न्ययोजयत् ॥

हा ! हन्त !! निर्घृणो हतविधिः शैवलिन्या ललाटे कति कति वा दुःखानि लिलेख ? जगतां स्रष्टारं पातारं च परमात्मानं विना कोऽवा जानाति ॥

—+- इति चतुर्दशः परिच्छेदः -+—





## पञ्चदशः परिच्छेदः

### —: शिविरे शैवलिनी :—

इमे तु नयने क्रूरे विरूपे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥
( रामायणम् )

प्रातरुषया सह शैवलिन्या मोहोऽप्यपससार । वातायनमार्गेणाभ्यन्तरं प्रविश्य मालयः पवनः शैवलिन्याः शैत्योपचारमिव कलयन्मन्दमन्दमाववौ । तथाऽपि तस्या अङ्गानि न स्वास्थ्यमभजन् । यदा हि चक्षुरुन्मील्यापश्यत्तदा मध्येशिबिरं कोमलतमं शयनमधिशयानाऽवर्तत । ततः 'क इमां मां निर्जनारण्यमध्यान्निशीथसमये मूर्छितां शिविरमिदं निनाय' इति नितरां विसिष्मिये । तदेव चिन्तयन्ती परिवृत्य पार्श्वे कमपि मूर्तिमन्तमिव रतिपतिं त्रिंशद्वर्षदेशीयमद्राक्षीत् । स च कुसुमशरनन्त्रपरतन्त्र एवावर्तत । तस्य किल मस्तके विचित्रं शिरस्त्राणम् । अधिकण्ठमनर्घहीरकखचितः सौवर्णो हारः । कर्णयोरमूल्यं कुण्डलयुगलम् । अङ्गुलीषु नवरत्नखचितान्यधरीकृततरणिकिरणान्यङ्गुलीयकानि । राजभोगीनं परिधानं कवचं च । कटिदेशे कोशनिषण्णः कृपाणः । पदयोः स्पृहणीये पदत्रे ॥

तादृशस्स युवा निर्निमेषं विनिन्दितारविन्दसौन्दर्यं शैवलिन्या वदनमवलोकयन्नासीत् । वाङ्माधुरीविरसीकृतसुधारसा शैवलिनी साद्भुतं सशङ्कं च व्याजहार, “ ननु भवान् कः ? ” इति । युवा तस्याः लपनलावण्यमवलोक्यैव विसस्मार सर्वम् ; पुनरपि वासन्तिकतरुणकोकिलनिनादमदपश्यतोहरं तस्या वचनमाकर्ण्य विस्मृत्यात्मानमप्यानन्दसागरे निलिल्ये । शैवलिनी पुनरपि वीणाक्वाणकल्पया वाण्यां ललाप, “ ननु भवान् कः ” इति ॥ स किल सर्वेन्द्रियसुखावहो निनाद इति सहृदयहृदयमात्रगम्यः । तदाकर्णनमात्रादेवास्य सर्वाण्यपीन्द्रियाणि जजागरुः । ततः सोऽपि युवा जगाद, “ अयङ्किल मदनपुराधिष्ठाना कोऽप्यग्रजन्मा नाम्ना वसन्तकुमारः ” इति । शैवलिनी तत्क्षणमुत्थाय मुकुलीकृतकरकमला व्याजहार, “ महाशय ! भूदेव ! ललनाः किल प्रकृत्यैवाविमृश्यकारिण्यः । माननीयस्यापि भवतः पुरस्तादज्ञानेन शयानाऽहमतीवापराद्धा । तत्कृपया क्षम्यताम् ” इति ॥

वसन्तकुमारः— ( सहासं ) सुन्दरि ! जहीहि तादृशीं चिन्ताम् । किमनेन शुष्केणोपचारेण ? इदमेवाशास्यमतीवास्मादृशैः । अयि ! बाले ! यदि तावकेन चरितामृतेन पिपासाकुलं मम श्रवणयुगलं प्रीणयसि, तदैव सुख्यति मे चेतः ॥

शैवलिनी — महाशय ! भवतु । अत्र मां को वा महाभाग आनिनाय ॥

वसन्तकुमारः— अयमेव ॥
शैवलिनी — किमर्थमानीतवान् ?

वसन्तकुमारः— सुन्दरि ! यः किल भुवनमोहनं तावकं लावण्यं सकृदपि वा भाग्यवशात् साक्षात्कुर्यात्, स किमुन्मत्तोऽपि परित्यजेत् त्वाम् । यत्किल कुसुमतल्लजं प्रमदवनयोग्यं वन्ये कर्दमपाङ्किलदेशे वर्तेत, तर्हि तत्कोवा नानुरूपं स्थानं नयेत् ? ॥

शैवलिनी— कुतो भवानत्रायासीत् ? कुतस्त्यः ?

वसन्तकुमारः— आस्ति सुवर्णपुरं नाम नगरम् । तच्चास्मदधिकारायत्तम् । तत्र प्रजाः किलोच्छृङ्खला बभूवुः । तन्निग्रहाय तत्र गत्वा पुनः प्रतिनिवर्तमानः पुरः प्रयान्तीं लावण्याधिदेवतां त्वां काननप्रवेशावसर एव व्यलोकयम् । अवलोकनानुपदमेव मदीयं मानसं त्वामेवानुदुद्राव । ततश्चाहमप्यवशः पश्चान्मन्दमन्दमागतः । क्रमशः परीतं सजलजलदघटाभिराकाशं विश्वतः । तदा किल काननात्प्रतिनिवर्तनाय त्वमयतथाः । आगमनावसरे पथि स्खलिता निपत्य मुमोहिथ । ततोऽहमानीतवानिदं शिबिरम् ॥

शैवलिनी— किन्नामेदं स्थलम् ?
वसन्तकुमारः— भागीरथीतीरवृत्ति चित्रपुरम् ।
शैवलिनी— तर्हि भवान्किल दयामूर्तिरापद्बान्धवः ।

वसन्तकुमारः—वासु ! सुन्दरि ! को वा तादृशः पाषण्डः नृशंसश्च वर्ततेऽस्मिन् जगति, यः किलाबलायास्तत्रापि द्व्यष्टवत्सरायाः तादृश्या भुवनमोहिन्या अपि साहायकं नाचरति । यथाऽहं तव प्राणानरक्षं, तथा त्वमपीदानीं ममापि प्राणान्परिरक्ष । कृते च प्रतिकर्तव्यं खलु । प्रियतमे ! प्रसीद; कुरु मयि दयाम् ॥

तदेतत्पापात्मनः कुत्सितां तादृशीं वाणीमाकर्ण्य परिदूना शैवलिनी सगद्गदं साश्रुनयनं च जगाद, " महाशय ! जीवितप्रद! भवान्किलाग्रजन्मा सत्त्वबहुलं हि ब्राह्मं तेजः । ब्राह्मणोऽपि भवान्कथं वा परकामिनीमालोक्य वज्रकल्पमिदं वचनं व्याहरति? मन्ये वयसा धर्मतश्चाहं भवतस्तनया भवामि । तथा ह्यार्षं वचनम्—

जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरस्स्मृताः ॥ इति ।

तल्लोकज्ञश्शास्त्रज्ञोऽपि किमित्येवमननुरूपं प्रयुनक्षि " इति ॥

वसन्तकुमारः—अयि ! सुन्दरि ! परदारपरिग्रहो नामानूचानसंप्रदायः । तथाहि—पितामहस्य तिलोत्तमाभिलाषः, भवानीपतेर्मुनिपत्नीसहस्रसन्दूषणं, पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः, प्रजापतेस्स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेरहल्याजारता शशाङ्कस्य गुरुतल्पगमनं, अंशुमालिनो बडवालङ्घनं, अनिलस्य

केसरिकलत्रसमागमः, बृहस्पतेरुतथ्यभार्याभिसरणं, पराशरस्य दाशकन्यादूषणं, पाराशर्यस्य भ्रातृदारसङ्गतिः, अत्रेर्मृगीसमागश्च सर्वजनविदितएव । किं बहुना ? तवाननारविन्दात्प्रणयपरिपूरितं वचनमन्तरेणान्यन्न मे कर्णपदवीमुपयाति ॥

शैवलिनी—पण्डितम्मन्य ! पर्यालोचय सावधानं
तेजीयसां न दोषाय वह्नेस्सर्वभुजोयथा

इति मानवं वचनम् । अयि ! ब्रह्मबन्धो ! त्वङ्किल शलभकल्पः । त्वांदृशां दुष्कृतां नियन्ता कोऽप्यन्यः परमेश्वरो जागर्ति । स किल साक्षी जगताम् । ईदृशमत्याचारं न कदाऽपि मर्षयति । अस्याश्च हरिहरहिरण्यगर्भादिदेवतानिन्दायाः फलमवश्यम्भावी रौरवो निरयः ॥

वसन्तकुमारः—प्रियतमे ! अहमपि जाने परोपदशे पाण्डित्यम् । तन्न श्रृणोमि यातयामानि तानि वचनानि । तत्प्रसीद । न चेद्बलात्सर्वं सेत्स्यत्येव ॥

तदेतदाकर्ण्य हालाहलकल्पं वचनं वेपमानाऽपि शैवलिनी जीवितं तृणाय मत्वा सधैर्यमुवाच, "रे ! दुराराध ! कामान्ध ! दुर्मते ! कुलाङ्गनायाः पातिव्रत्यमहिमानमपि नाम न जानासि ? तर्हि जानीहि सतीमणीनां चारित्रमणुमात्रमपि भ्रंशयितुं हरिहरविरिञ्चिष्वपि न कोऽपि शक्नुयात् । किं पुनर्मशकल्पो मानवः ? ताः किल सतीत्वरक्षायै जीवितमपि तृणाय मन्यन्ते" इति । एवं वदत्येव कोशात् खड्गमाकृष्य विप्रकृता विवृतफणा पन्नगीव

साभिमानमुदातिष्ठत् । तस्याः किल कोपानलप्रज्वलितयोर्नयनयोः परिपेतुः स्फुलिङ्गाः । नासाग्रमधरदलेन साकं ननर्त । रोमाञ्चितान्यङ्गानि । श्वासाश्च दुर्जनदूरीकरणायेवाहमहमिकयाऽधिकाधिकमाविरासन् ॥

शैवलिन्यास्तादृशं रूपमालोक्य वसन्तकुमारस्सस्मार महिषासुरमर्दिन्याः । तस्य चाङ्गानि नितरां चकम्पिरे । अतर्कयच्च 'हा ! हा !! नेयमबला । नूनं काऽपि राक्षसी युवतीरूपेण निर्जनेऽस्मिन्नरण्ये मानवपललार्थिनी चरति । अद्यास्माकमितः पलायनमेव परमं शरणम्' इति ॥

तदनु सैनिकानाहूयादिदेश, "यदीयं पुरुषादिनी न भवति, तर्हीमामानयतास्माकीनं नगरम् । तत्र च तामेनां दुश्शीलां पिष्टपेषं पिनष्मि" इति । ततः प्राणत्राणपरायणः प्रदुद्राव । तेऽपि सैनिकास्ततः परं यथादेशं मदनपुरं शैवलिनीं निन्युः । वसन्तकुमारोऽपि तां कस्मिंश्चित्प्रासादे निवेश्य "यथा सा तादृशं रौद्रं भावं परित्यज्यानुकूला भवेत्,तथा भवतीभिश्चतुर्भिरुपायैः प्रयतितव्यम्" इति निवेद्य, चतुरा एव परिचारिकास्तत्र न्ययोजयत् । ताश्च 'यथा शैवलिनी वसन्तकुमारे समनुरक्ता भवेत्,तथा विधाय पारितोषिकमधिकाधिकमाप्नुयाम' इत्यहमहमिकया तां परितः प्रावव्रुर्वैदेहीमिवाधिलङ्कं नक्तञ्चरकामिन्यः ॥

--:* इति पञ्चदशः परिच्छेदः *:--

## —:* षोडशः परिच्छेदः *:—

### —: अन्तःपुरम् :—

देव्वम्मि पराहुत्ते पत्तिअ घडिअं वि विहडइ नराणम् ।
कज्जं वालुअवरणं कहं वि वन्धं विअ ण एहि ॥

छा ॥ दैवे पराङ्मुखे प्रतीहि घटितमपि नराणाम् ।
कार्यं वालुकावरण इव कथमपि बन्धमेव न ददाति ॥

( गाथासप्तशती )

मदनपुरं किल वसन्तकुमारस्य निवासस्थलम् । तत्र पुरप्रान्ते कोऽप्यभ्रंलिहः प्रासादः । तत्प्राकारमालिङ्ग्य काऽपि प्रावाक्षीद्द्रावती नाम तरङ्गिणी । प्रासादद्वारे प्रथमत एव दौवारिकाणामावासस्थानम् । तत्र नलिकास्त्राणि खड्गाः छुरिकाः तोमराणि चेति विविधान्यायुधजातानि कुड्यतलेषु ललम्बिरे । तोरणस्यान्तः पार्श्वत एव विशालं व्यावहारिकं स्थानम् । तत्र च लेखकाः पङ्क्तिशो निषद्य,एकतानेन चेतसा पत्रिकासु लेखनीरधावयन् द्रुततुरङ्गमानिव । केचन व्यवहारदायिनः पुरुषास्तूष्णीमतिष्ठन् तेषां पुरतः पत्रहस्ताः । ततश्चाभिप्रासादं देवायतनम् । तत्र प्रत्यहमासायं पूजादि प्रवर्तते स्म । देवायतनात्परं सुन्दरतमं राजकुलम् । द्वारदेशे विचित्रवेषाः किङ्करास्सन्नद्धाश्च आसन् । सकलकलं राज-

कुलं सुधांशुबिम्बमिव । तत्र च द्वितीयं सौधतलमतिमनोहरै-श्चित्रैर्वैद्युतदीपैर्दर्पणैः प्रतिमाभिश्च परिमण्डितम् । तत्रापि वसन्त-कुमारस्य शयनगृहमतीव रमणीयम् । तत्र हि भित्तिभागेषु तत्र तत्र दशावताराः, हरचरितं, रामचरितं, कृष्णचरितं, भारतयुद्धं, द्रौपदीवस्त्रापहारः, कीचकवधः, सावित्रीचरितं, नलचरितं, हरिश्चन्द्रचरितमित्यादीनि पुरातनचरितावेदकान्यन्यान्यपि विचित्राणि चित्राण्यासन् । वातायनानि स्फटिकमयानि । वसन्तकुमार इव गृहमप्यतिसुन्दरम् ॥

स किल विवेकी कार्येषु कुशलश्च । किमेतावता समायातम् ? यः किल यौवनमदवारणकरगतो न भवेत्स एव विवेकी धीरश्च। अयङ्किल वसन्तकुमारः न केवलं यौवनव्यालगृहीतः, किन्तु कापथयायी च, कामिनीकटाक्षवागुरायां पतितः । किम्बहुना ? न कदाऽपि मृषा भवति महाकवीनामव्याहतं वचनम् । तथा हि

नदवधि कुशली पुराणशास्त्र-
श्रुतिशनचारुविचारजो विवेकः ।
यदवधि न पदं दधाति चित्ते
हरिणकिशोरदृशो दृशोर्विलासः ॥

इति पण्डितराजः प्रवक्ति । वसन्तकुमारोऽपि मनसिजभ्रूकिङ्करो भूत्वा कापथे प्रतस्थे । सन्तोऽप्यन्ये निखिलास्सन्तो गुणाः कानन-चन्द्रिकाकल्पा एव । स च द्वितीयं सौधतलमधिवसन्नेकाकि

तया व्यचिन्तयत्, 'अपि नाम शैवलिनी मे पाणिगृहीती भवेत्। गतेष्वपि प्राणेषु शैवलिनीं नाहं त्यजामि । आ ! किमेतत् ? गृहाभ्यन्तरे गीतध्वनिरिव श्रूयते । हा ! कैषा चिन्तातरङ्गिणीं प्रतिबध्नाति गीतसेतुना ? किमयं प्रेयस्याः पद्मावत्याः कण्ठस्वरः ? ( आकाशे लक्ष्यं बध्वा ) पद्मावति ! किमस्थाने व्यामोहयसि मे मानसमन्यत्र सङ्क्रान्तम् । विरम विरम ! । कीदृशी तवामूया ? शैवलिन्या विना न किमपि महच्चं रोचते । हा ! किं कुर्याम् ? पुनरपि गृहाभ्यन्तरे गायति किमपि पद्यम् —

प्रियतम ! नव तादृङ्मानमं कुत्र यातं
सशपथवचनं वा तादृशं कुत्र कान्तम् ।
ननु विदितमिदानीं मायिनस्ते स्वरूपं
बत ! बत ! कुलटायाश्शैवलिन्याः प्रियोऽसि ॥

इति । सत्यं पद्मावती मामन्यासक्तं जानाति । हन्त ! हन्त !! सा किलोन्मत्ता । शैवलिन्याः पाणिग्रहणेन का वा हानिः ? को वा दोषः ? आहोस्वित्किमियमविमृश्यकारिता ? किमेतदनुचितम् ? हन्त ! हन्त ! सा किल मुग्धा लोकव्यवहारानभिज्ञा च । किमेकं नालं नावलम्बते फलद्वयी ? किमेकं रूपं द्वे रशने न परिवृणाते ? किमेकः षट्पदो बह्वीषु मञ्जरीषु न रसमास्वादयति ? किमेक एव रत्नाकरस्तरङ्गिणीर्नैकदा समालिङ्गति । किमेक एव वृक्षः कामं लताभिर्नाव्रियते ? किमेक एव कलानि-

भिस्ताराणां न प्रियतमः ? सत्येवं शैवलिन्याः पाणिग्रहणे को वा निरोधः ? शैवलिन्यास्तादृशमपाङ्गवलनं तादृशं च कुटिल-सुकुमारमधुरगम्भीरं वचनं न किमुन्मादयेन्मानसम् ? अपि नाम पद्मावत्यास्तादृशं चातुर्यं वैदग्ध्यं साहसिक्यं चास्ति ? यत्र कुत्र वाऽस्त्वनर्घं रत्नं, तदवश्यमुपभोगार्हमेव । यथा तथा वा भवतु—नाहं नामनूढ्वा क्षणमपि जीवेयम् ' इति ॥

तथैव मनसिकृत्य वसन्तकुमारस्तस्मान्निश्चक्राम ॥

—:*: इति षोडशः परिच्छेदः :*:—





## —: सप्तदशः परिच्छेदः :—

## —: चतुरता :—

—*—

न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥
( रघु. )

शैवलिन्याः किल वसन्तकुमारस्य प्रासादे द्वे प्रियसख्याव-भूताम् । तयोरेका चित्रलेखा, परा पत्रलेखा । पत्रलेखा पुनः पद्मावत्याश्च प्रियसखी । यदा वसन्तकुमारश्शैवालिनीमुपच्छन्द-यितुं न्ययुङ्क्त पत्रलेखां, तदा सा पद्मावत्यै प्रियतमस्य तादृशं भावं व्यज्ञापयत् । तद्विज्ञाय पद्मावती पत्रलेखामप्राक्षीत्, "अपि नाम शैवलिन्यास्तादृशमाभिरूप्यमस्ति ?" इति ॥

पत्रलेखा—नाहमस्मिन् जन्मनि कुत्रापि तादृशीं रूपवतीं कामिनीमद्राक्षम् । किम्बहुना ? तामालोक्य ममापि मानसं कुसुमशरपरतन्त्रमासीत् । किम्पुनः पुंसाम् ? ॥

पद्मावती—पत्रलेखे ! शैवलिन्यास्सङ्कल्पः कीदृशः ?

पत्रलेखा—सर्वदाऽहं तया साकं निवसामि । बहुधा प्रालोभयञ्च । तथाऽपि तस्याः प्रकृतिर्नान्यथाऽभूत् । सा किल सन्ततं चिन्ताग्रहग्रस्ता वर्तते । न किमप्यालपति । अत एव जाने 'तस्याः मानसं नास्माकं स्वामिनि किञ्चिदप्यनुरक्तम्' इति।

किंतु तथैव प्रतिज्ञातुमपि न शक्यते । प्रकृत्या चञ्चलं हि चपलानां हृदयम् ॥

पद्मावती—पत्रलेखे किं सकृदपि शक्नोषि तामानेतुम् ?

पत्रलेखा—बाढमस्मि शक्ता ।

पद्मावती—तर्हि तदीयां मनोवृत्तिं निमेषमात्रात् ज्ञास्यामि ।

पत्रलेखा—कथं जानासि निमेषमात्रेण ?

पद्मावती—त्वया न शक्यते । मया त्विङ्गितपर्यालोचनया ज्ञायत एव ।

पत्रलेखा—तेन किं ते मनोरथस्सेत्स्यति ?

पद्मावती—यदि जानामि तदीयं मानसमस्मत्स्वामिनि समनुरक्तमिति, तदा क्रोत्स्यामि मामकाय कपाललेखाय । न चेत्सुखं स्थास्यामि ।

पत्रलेखा—कदा वाऽऽनेतव्या ?

पद्मावती—अधुनैवास्तु ।

पत्रलेखा 'तथा' इत्युक्त्वा द्रुतं निर्जगाम; शैवलिनीमासमाद च । तदा किलैवं चिन्तयन्त्यासीत् शैवलिनी, 'हा! हतविधिर्मदीये कपाले कतिकति वा दुःखानि लिलेख? हा! हा! पिता किंवृत्तः? अयि! जननि! त्वमपि कुत्रासि? इदानीमवलोकय नव प्रणयखनेश्शैवलिन्याः दशापरीपाकम् । अनया दस्युगृहे कतिकति वा दुःखानि नानुभूतानि? हा! हन्त! पुनरपि विपदि निपातिता किल । "विपद्विपदमनुबध्नाति" इति,

हतोहि हन्यते पादः नष्टगेहं हि नश्यति ।

इति च लोकोक्तिर्न कदाऽपि मृषा भवति । साऽहं दस्युगृहात्पलाय्य विटहस्ते निपतिता । स किल मदर्थमुन्मादावस्थामधिगतोऽस्ति । नियतमिदानीमन्यतरस्य विनाश एवावश्यं भविता । अहह ! यदभिलषति मानसं तदेवावश्यमधिगन्तव्यमिति को वा निर्बन्धः ? किमथवा तथैव विधिरपि प्रेरयति ? वसन्तकुमारस्यापि वैदुष्यं, यौवनं, धनसंपत्तिः, आभिरूप्यं, आभिजात्यं, प्रभुत्वं चेत्यपेणीयमखिलमपि वर्तत एव । तथाऽपि मदीयं मानसं नानुमनुते ; किन्तु विजयस्य तादृशं लावण्यं, तादृशं मधुरवचनं, तादृशं वैदग्ध्यं च स्मारंस्मारं तदन्यदखिलं तृणाय मन्यते ; 'विजय एव प्रियतमः । तेन विना नान्यस्य स्मरामि' इति प्रतिजानीते । तदद्य कुत्र वा प्रियंवदा ? यदि प्रियंवदा समीपे ममावर्तिष्यत तदा तामेवाप्रक्ष्यम् । यदीन्द्रियादीनि पृच्छामि, तर्हि प्रथमेव कूटस्थं मानसं " विजयं याहि " इति, कर्णौ " विजयस्यालापमाकर्णय " इति, सर्वाण्यप्यङ्गानि " विजयस्य गाढोपगूहनमनुभव " इति चोत्तरयन्ति । एवं सर्वेषु कृतसङ्केतेष्वशरणा मन्दभागिन्येकाकिनी किमहं करवाणि ? भूयोऽनुग्रहन्यायः किलाङ्गीक्रियते सर्वत्र वैदिके लौकिके च व्यवहारे । तदहमेतेषामेव मतं प्रविष्टा न कदाऽपि वसन्तकुमारं परिणेष्यामि' इति ।

तदा किल पत्रलेखा शैवलिनीं संबोध्य व्याजहार—" सखि ! शैवलिनि ! अद्यैव पद्मावती त्वां दिदृक्षते । सकृदायाहि " इति ।

साऽपि 'तथा' इति तामनुजगाम। पश्चान्मन्दंमन्दं यान्ती व्यचिन्तयत् 'इदानीं पद्मावत्या मुखेनैव चिकीर्षितं साधनीयम्। नो चेज्जीवितं वा प्रदेयं कृतान्ताय' इति। पद्मावत्याश्च गृहमभ्येत्य तां सविनयं प्रणनाम। साऽपि 'एहि भगिनि एहि' इत्यगादीत्। पत्रलेखाऽपि कार्यान्तरे व्यापपार। शैवलिन्यास्तादृशं लावण्यमवलोक्य पद्मावत्यवाङ्मुखी भभूव। न किमपि वक्तुमशक्नोदाश्चर्यपर्याकुला। क्षणमिव तूष्णीं स्थित्वा शैवलिन्येव पप्रच्छ 'भगिनि! कुतो मामाह्वयः' इति॥

पद्मावती—भद्रे! तव रूपराशिमालोक्य स किल मम स्वामी बभूवोन्मत्तः। सर्वदा त्वामेव चिन्तयति। तस्य तादृशं क्लेशमालोक्य नाहं शक्नोमि तूष्णीमधिष्ठातुम्। तत्त्वां सानुनयं याचे 'त्वं किल तं परिणीय सुखमास्व' इति।

शैवलिनी तस्यास्तादृशं साकूतं वचनमाकर्ण्य तदिङ्गितञ्चावलोक्याभावयत् 'नूनमिदानीं पद्मावती प्रलोभ्य मां मदीयमाशयं ज्ञातुमीहते। अन्यथा का वा तरुणी स्वयमेव सपत्नीमपेक्षेत' इति। तदनु जगाद शैवलिनी—"भगिनि! त्वङ्किलातीव बुद्धिमती। तथापि मुखकमलादीदृशं वचनमाकर्ण्य नितरां शोचामि। स्त्रीणां पतिर्हि परमं दैवतम्। यद्येकदा परिणीता कामिनी, तर्हि पुनरपि तस्याः कीदृशो विवाहः। स किल व्यभिचारापरपर्याय एव। का वा भागिनी तादृशमत्याचारं विधायापि निरयगामिनी भवेत्" इति॥

पद्मावती—शोभने ! तदहमपि जाने । किन्तु क इदानीमभ्युपायः ?

शैवलिनी—नाहं कण्ठगतेष्वपि प्राणेषु परस्य पाणिं ग्रहीष्यामि । यस्मै प्राणान् यौवनं मानसञ्चैकपदे प्रादां, तेन विना जन्मान्तरे ऽपि नान्यं मनसाऽपि चिन्तयेयम् । इयमेवाचञ्चला मे प्रतिज्ञा । अन्यथा मरणमेव शरणम् ।

पद्मावती किलैतादृशीं प्रतिज्ञां कारयितुमेव शैवलिनीमाजुहाव । शैवलिनी पुनरपि जगाद—"भगिनि ! मम प्राणपरिरक्षणाय शीलरक्षणाय च त्वयैव कोऽप्युपायः परिमार्गितव्यः" इति ।

पद्मावती—नाहं कश्चिदपि जानाम्युपायम् । केवलमिदानीमेक एवोपायस्साधीयानिति प्रतिभाति । स चेतः पलायनमेव ।

शैवलिनी—तच्च कथं भविता मन्दभागिन्या मम ।

पद्मावती—किञ्चिद्गुप्तं सुरङ्गद्वारमास्ते । तच्च विना मया न केनापि ज्ञायते । तेन पलायस्व । तेनैव पथा याती भागीरथीकूलमवाप्स्यसि । ततस्त्वं यथाभिलषितमाचर ।

शैवलिनी—यद्यहमितः पलाये, तर्हि मां वसन्तकुमारो मार्गयेत् । तदा किं वक्ष्यसि ?

यदि त्वं तूष्णीं भवेः, तर्हि नियतमस्मदारक्षतामुपेतयोस्सख्योः प्राणसंशय एव भविता । तथा न कदाऽपि भवितव्यम् ।

पद्मावती—तर्हि तावकस्सिद्धान्तः कीदृशः ?

शैवलिनी—यद्यत्रैव स्थितां मां वसन्तकुमारो निर्बध्नीयात्,

तर्हि नियतैवात्महत्या । तया च न कस्यापि कोऽपि क्लेशस्स्यात् । इयमेव मन्दभागिनी कर्मफलमवाप्स्यति ।

पद्मावती—भगिनि ! त्वं किल मुग्धा । नान्यत्पापिष्ठतममात्मत्यागात् । त्वामिनः प्रागत्याचारस्य फलभूतं यादृशं नरकमाशङ्कथास्ततोऽप्यतिशयितं निरयमेनमनवरतमनया प्राप्नुयाः । अत ईदृशं सङ्कल्पं दूरे कुरु । तव सख्योर्विषयेऽपि चिन्तां मा कृथाः । तत्राप्यहमुपायं जानामि ।

तदनु शैवलिनी प्रत्यशृणोत् । तदैव गुप्तेन सुरङ्गद्वारेण प्रतस्थे । ते किल ललने 'स्वाभिमतसिद्धिरभूत्' इत्यभावयताम् । शैवलिनी तेनैव पथा प्रदुद्राव । कियच्चिद्दूरं गतायास्तस्यास्सा च सरणिस्तरणिना सहान्तर्दधे । अग्रत एव स्थिताया मन्दाकिन्यास्तीरमाजगाम । तदा शैवलिन्याः प्रियसखीव सन्ध्याऽप्याययौ ॥

मदनपुरे शैवलिनीं द्रष्टुकामस्तदीयमगारं विवेश वसन्तकुमारः । न तत्र शैवलिनी । गृहे निखिलानप्यप्राक्षीत् । तदनु सा पलायामासेत्यज्ञासीत् । ततस्सत्वरं व्यद्रावयद्विश्वतो जङ्गलान् किङ्करान्मार्गणाय । दैवान्न कोऽपि भागीरथीतीरं जगाम । न कोऽपि शैवलिन्या वार्तामप्यविन्दत । वसन्तकुमारस्तु शैवलिनीं ध्यायं ध्यायं महतीं व्यथामापेदे । क्रमशस्तदीयां आशां च परितत्याज ॥

सा च तपस्विनी शैवलिनी मन्दाकिन्यास्तीरे निशीथिनीद्वितीया अवर्तत ॥

—* इति सप्तदशः परिच्छेदः *—



## — अष्टादशः परिच्छेदः —

### —: गङ्गातीरम् :—

सर्व एव शुभः कालः स्वरूपं यदि सुन्दरम् ॥

(शिवलीलार्णवः)

धवलधवलाभिश्चन्द्रिकाभिः प्रद्योतितायां रजन्यामुपगङ्गं सिकनिलां वितर्दिकामधिष्ठाय शैवलिनी प्रकृतिशोभां विलोकयन्ती तस्थौ। प्रतितरङ्गं चन्द्रिका रजतशकलनीव प्रास्फुरत्। वात्यया समाकुलाभिस्तरङ्गपरम्पराभिराकृष्यमाणा मन्दाकिनी शैवलिनीवाशरणा पलायामास। तीरवृत्ति निखिलमपि प्राणिजातं निस्पन्दमवातिष्ठत। प्रकृतिमहिषी समुन्नतं तरुशिखरसिंहासनमधिष्ठाय स्वमाधिपत्यमतनोत्। सम्राज्ञ्या इव तस्यास्सकलमपि भुवनं विभाय। मन्दाकिनी पुनर्नर्तकीव क्वचिन्ननर्त। क्वचित्सकलकलं जगौ। झिल्लीगणोपि गीतानुगुणं झंझमिति तालमाकलयति स्म भर्त्र्याः प्रसत्त्यै। साऽपि प्रकृतिमहिषी सार्वभौमीव व्यराजत। तथा हि—चामरकंकारी मारुतः। मृगालाः प्रतीहारिण इव कर्कशतरेण निनादेन भीषयन्ति स्म दूरस्थानपि सर्वान्। शैवलिनी तादृशीं निम्नस्थलशोभामालोक्य तदनु व्यलोकयदुपरि। तत्र किल विशाले नभोमण्डले माध्यस्थ्यमधिगतः कलानिधिस्सर्वस्यापि तारागणस्य सुश्लिष्टतामतनोत्। तदेतदखिलमालोक्य शैवलिनी पुलकिता बभूव; किञ्च धूर्तहस्ताद्दूरीभूता नितरां मुमुदे। तदा किल शुक्लाष्टमी। यामिनीवल्लभः प्रहरद्वयमेव स्वमधिकारं निरङ्कुशं विधाय श्रान्त

इव शिशयिषुः प्रतस्थे । कान्तवियोगादिव तिमिरव्याजेन कालिमानमवाप मन्दंमन्दं दिगङ्गनानां मुखम् । शैवलिन्याश्च लपनमवाप मालिन्यम् । एतावता प्रफुल्लमस्या वदनकमलं किमित्यकस्मात्परिम्लानम् ? हन्त ! ज्ञातम् ! अद्य किल शैवलिनी चिन्ताग्राहेण कवलीकृता । "नियतमद्यास्तमुपयाति निशानाथः । राक्षसीव तमिस्राऽपि सान्द्रमखिलमपि लोकं कवलयति । क्व यामि ? किङ्करोमि ?" इति परिचुक्षुभे । निशापतिरप्यन्तर्दधे । वसुन्धराऽप्यन्धङ्करणेन तमसा वव्रे । लाजस्फोटं प्रास्फुरदधिकाधिकं नक्षत्रवृन्दम्; स्वाधिष्ठानस्थलमुद्योतयामास च शैवलिनीव । साऽप्यवलोक्यान्धङ्करणं तमो नितरां बिभाय । तदनु बहुशो विचिन्तयन्ती निकनिलं शयनमधिशिश्ये । परिश्रान्ता चिरादवाप निद्राम् ।

क्षीणमाणायां च क्षपायां तिमिरनिकरोऽपि चिक्षाय । गगनतलात्तारकाश्च निष्प्रभास्स्वर्गिण इवावसितसुकृताः पेतुरधोमुखाः क्रमशः । नीरगतासु तरुशाखासु कोकिला मधुरमधुरं कुहूध्वनिमारचयामासुः । शैवलिन्यपि तत्याज निद्राम्; ततश्च प्रतिपत्तिमन्थरा स्वैरं जगाम । गत्वा च सुदूरं नीरगतां कामपि तरणिमद्राक्षीत्; तदन्तिकं जगाम; नाविकमाह्वयच्च । सोऽपि तस्या वाचमाकर्ण्य समीपमाजगाम । शैवलिनी जगाद—"भद्र ! तरणिः कुत्र यास्यति" इति । नाविकः प्राह स्म—"किमिति पृच्छसि ? इयमेवास्माकीना वृत्तिः यत्प्रस्थातॄणामभिमतस्थलयापनम् । तदारोहतु; यथाभिमतं स्थलं नयामि" इति । तदनु शैवलिनी नावमा-

रुह्य बहिरालुलोके । भयानकैस्तरङ्गनिकरैराकुला कूलंकपा मन्दाकिन्युभयतस्समालिङ्ग्य गगनप्रान्तं प्रवहति स्म । नौकाऽपि कियच्चिद्दूरं गत्वा परं तीरमाययौ । नाविकस्तां नौकानस्समवतार्य पारनौषिकमधिगम्य जगाम । तदनु शैवलिनी विश्रान्तिं कामयमाना कस्य चित्तरोरधश्शयाना निद्रया वव्रे ।

अत्रान्तरे कोऽपि भिक्षुस्तेन पथा यान्मध्येपथं तरुमूलमधिशयानां तामालोक्य तदभिमुखं द्रुतं प्राद्रवत् । दर्शनमात्रादेव तां प्राबोधयच्च । शैवलिन्यप्युत्थाय यदा पश्यति, तदा कोऽपि भिक्षुरग्रतस्तस्थौ । अयङ्किल महात्मा रमानन्दः । सा च रमानन्दं विज्ञाय प्राणंसीत्; जगाद च—"तात! पुनरपि तत्रभवतां भवतां पादारविन्ददर्शनभाग्यं समुदियादिति न स्वप्नेऽपि व्यचिन्तयम्" इति । तदेतदाकर्ण्य रमानन्दः प्रोवाच—"वत्से! न बिभिहि । एहि अत्रैव नातिदूरे विन्ध्याचलाधित्यकायामास्माकीनो निवासः । गच्छ । तत्रैव सुखं स्थास्यसि" इति ।

साऽपि शैवलिनी तथेति प्रतिपद्य तेन सह विन्ध्याचलं जगाम । भिक्षुरपि तस्या वारंवारमुपदिदेश साधुवादान् । अहह! विचित्रा किल गतिः प्रेम्णः, येन किल सन्दानितं मानसं न किमप्यन्यदनुबध्नाति । मानसं किल रोगादिभिराकुलितमप्यगदेन किञ्चिदिव सोढुं शक्यं; प्रियजनवियोगामयस्तु न त्रुटिमात्रमपि सह्यो भवति । पुनरपि समागम एवास्य सिद्धौषधम् । नान्यत्किमपि वर्तते त्रिभुवनेऽपि ॥

अहो! अद्य किल वाति विश्वतस्स्पृहणीयो वासन्तिकः परिमलभरभरितकुसुमनिकरसुकुमारसुगन्धतुन्दिलो गन्धवाहः। कालस्य प्रकृतिर्मुनीनामपि चित्तप्रमाथिनी । राकाऽपि निर्मलतरचन्द्रिकामनोरमा। कलानिधिः कलाभिरलंकृतो विराजते। तादृशीं शोभामालोक्य मन्दाकिन्यपि सानन्दं तरङ्गनिकरपरिक्षोभव्याजेन ननर्त। किम्बहुना? सर्वेष्वपि कालेषु दृश्यताया अन्यादृश आलयो मधुमासः। ईदृशे समये विजयविरहकातरं शैवलिन्या हृदयं कथं नाम शान्तिमियात्। कुसुमसुकुमारं हि तस्या हृदयं विजय एव निलिल्ये; न कुत्रचिदन्यत्र चचार। विजयविहीना जगज्जीर्णारण्यं मेने। पुरा किलोद्याने विहरन्ती शैवलिनी यद्यदशृणोद्विजयस्य वचनं, तदखिलमपि स्मारंस्मारमुन्मत्तेव बभूव॥

हन्त! तस्यामवस्थायां रमानन्दस्य तादृश उपदेशः किं करोतु? शैवलिन्या मानसी व्यथा परं न किञ्चिदपि चिक्षाय॥

—* इति अष्टादशः परिच्छेदः *—



## ऊनत्रिंशः परिच्छेदः

### — कानने युवा —

एको अरण्णे गिरिकन्दरायं पग्गय्ह पग्गय्ह सेलं पवेसि ॥
( जातकं पाली )

(एकः अरण्ये गिरिकन्दरासु प्रविश्य प्रविश्य शैलं प्रविशाति।)

अथ किल प्रादुरासन्वासन्तिका वासराः । खरकिरणस्य प्रखरा मयूखा विश्वतः स्फुलिङ्गकल्पाः प्रसस्रुः । सन्तप्तेन पवनेन प्रचालितानि शुष्काणि पत्राणि तप्तानीव मर्मरारवव्याजेन विरुरुवुः। तरणिकिरणस्पर्शमात्रेण प्राणिनामङ्गानि पुस्फुटुः । पथि वालुकास्तुषानलकणा इव भृशोष्णा अभवन्।बहिः पादक्षेपवार्ताऽपि प्राणिनां प्राणहारिणी । खरकरः स्वैरं शरवर्षं ववर्ष खरान् किरणान्; विश्वतः समशोषयच्च सर्वाणि वस्तूनि । द्विजगणाः खलस्येव पुरस्तूष्णीमासामासुः; भीतभीताश्च स्वेषु स्वेषु कुलायेषु शावकैस्सह निलिल्यिरे।चातकाः केवलं चुकूजुः पिपासार्दिताः। यदेते वर्षास्वतिवृष्टिमालोक्य गगनाङ्गणं व्यनिन्दन्, अधुना तदपि गगनमुपालभतेव चातकान्। तत्र किल मरुमार्गे न कोऽप्यासीत्तरुः । नापि किञ्चित्सरः। सर्वतस्सुदूरं निरीक्षितेऽपि प्रखरकिरणतप्ता वालुका एव समदृश्यन्त। अस्यां दशायां तादृश्यां धरायां गच्छन् कोऽपि युवा कमप्याश्रयमलभमानः द्रुतगतिः प्राद्रवत्। तस्य किल सर्वाण्यप्यङ्गानि घर्मबिन्दुकवचितानि । कण्ठयायिनः प्राणाः । हन्त! किं करोतु? स किल धीरोदात्तः सर्वं क्लेशं सेहे ; न कुत्रचित् क्षणम-

प्यास विश्रमाय ; अविश्रान्तं जगाम ; तिष्ठन्वा किं करोतु ? उपरि निष्पतन्ति स्फुलिङ्गकल्पा रविकिरणाः । अधश्च तुषानलदेश्या वालुकाः । रविकिरणाश्च कथञ्चिच्छक्यन्ते सोढुम् ; प्रतप्ता वालुकाः परं न मनागपि सह्याः । तदेतदखिलं विचिन्त्य नेत्रे निमील्य प्रययावतितरां पथिकः । मरुमरीचिकामालोक्य जलभ्रान्त्या नितरां मुमुदे तस्य नयनयुगं ; विचकास च । तदनु स सोर्ध्वश्वासं प्राद्रवत्तदभिमुखम् । यथा यथा पथिकः प्रदुद्राव, तथा तथा साऽपि मृगतृष्णिका दूरदूरं जगाम । युवा ऽपि क्षणं श्रान्त इव तस्थौ ; पुनरपि जलाशया प्राद्रवत् । हा ! हन्त ! कुत्र वा जलम् ? ततश्चिरादज्ञासीत् नेदमुदकं किन्तु मरुमरीचिका इति । तथाऽप्याशा परं न दूरं जगाम ॥

हन्त ! हन्त !! यद्याशा दूरीभवेत्तर्हि संसारे दुःखं नाम कीदृशम् ? । हा ! हा !! भवाब्धौ प्रवहन्त्या मानसतरणेराशा नाम विपत्करी काऽपि प्रबला वात्या । हन्त ! मरीचिका, स्वप्नः, अचिरप्रभेति तिस्रः किलावलोकनक्षण एव सुखप्रदायिन्यः ; आशाऽपि तासामन्यूनैव । हन्त संसारसागरे निपतितस्य कस्य वा महाभागस्य फलवती बभूव सा साकल्येन ? अयमपि पान्थस्तस्या एव प्रकिङ्करः द्रुतं प्राद्रवत् । सुदूरं गतः कमपि च्छायाद्रुममवलोक्य तदन्तिकं जगाम । स किल महान्न्यग्रोधः । तस्य किल शाखा विश्वतोरुन्धन्त्याशाः । तरुतलमतिशिशिरम् । तत्र प्रवेशादेव सकलोऽपि दूरीभवेत्सन्तापः ॥

सोऽपि युवा तदेव तरुतलमधिष्ठाय जगदीश्वरस्य महिमानमनुचिन्तयन्नास। वृक्षाग्रेषु पतगकुलस्य मधुरमधुरं गानमाकर्ण्य स्वर्गमपि तृणाय मेने। दिक्षु विदिक्षु च सर्वत्र विद्यमाना निखिला अपि विहगास्तत्रैव तरुशिखरे सुखमूषुः। तस्य तरोर्नातिदूरे किमप्यतिविपुलं सरः। युवा तदेव नानाजलचरगणसमुल्लसितं स्वच्छसाधुजलापूरितं सरस्समुपेत्य स्वैरमवगाह्य पिपासां दूरीचकार। पुनरपि तदेव तरुतलमवजगाहे। तत्र च निजमुत्तरासङ्गमास्तीर्य शिश्ये। निद्राऽपि सानुकम्पमुपेत्य युवानं विस्मृतश्रमं चकार। तदा किल तस्य मानसं स्वप्नराज्यं विचचार। हन्त! निद्रे! भद्रं ते। प्रशस्या किल तवानुकम्पा। धन्या ते मोहिनी शक्तिः। श्लाघ्यं ते चरितम्। युवा किल तस्मिन्नेव नानाविधविहगकुलकलरववाचालिते तरुतले शयानः कमप्यद्भुतावहं स्वप्नमद्राक्षीत्॥

कदाचित्कस्मिंश्चिदतिमनोहरे उद्याने युवा कामपि पद्मिनीमद्राक्षीत्। तत्र च कालक्रमात्किमपि सौवर्णं मुकुलयुगलमाविरासीत्। तदवलोक्य युवा मुमुदेतराम्। सा किल कमलिनी प्रतिक्षणं प्रवर्धमाना शतगुणमवाप सौन्दर्यम्। पवनेन दोलायमानां तामवलोक्य युवा व्यचिन्तयत्, 'किमियं शिरश्चालनेन मामाह्वयति' इति। कमलिनी प्रकृत्या सुकुमारा। अस्यां किल दशायां मधुभरितां तामालोक्य कतिकति वा नाययुर्मधुपा मधुपानाय? किन्तु तेषां कुतस्तादृशं भाग्यम्?

अत्रान्तरे गगनाङ्गणमम्बुदास्सङ्घशः प्रावव्रुः। अनुपदं झञ्झा-

निलश्च प्रादुरभूत् । तेन बहूनि गृहाणि समुन्मूलितानि ; बहवश्चानोकहास्समूलमुत्पाटिताः । साऽपि कमलिनी सुदूरमतिवाहिता । तदवलोक्यातीव दूनो युवा तदन्वेषणाय जगाम । सा तु न कुत्राप्यवालोकि । तथाऽपि सुदूरं गत्वा कुत्रचित्पङ्किले सरसीजले पतितां ददर्श कमलिनीम् । तत्र कोऽपि कीटस्सुधापिपासुरेतदन्तिकमाययौ । तमवलोक्य भीतभीतेव वेपमाना शिरःकम्पनेनैव स्वाशयमावेदयत्, "अयि ! क्षुद्र ! धूर्त ! मा स्पृश मां दूरमपेहि" इति । स किल धूर्तः ! तन्नाशृणोत् । सा किल सदैन्यं चक्रन्द । सुधासारव्याजेन बाष्पधाराः प्रादुरासन्नधिकाधिकम् । ताभिस्तस्या वक्षस्स्थलं आप्लावि । न परं तस्य धूर्तस्य हृदयं किञ्चिदप्यार्द्रमभूत् । वारंवारं मधुपानोद्यतः पद्मिनीं व्याकुलीकर्तुमयतत । अस्मिन्व्यतिकरे तेनैव पथा गच्छन्कोऽपि राजहंसस्समीक्ष्य तस्य धूर्तकीटस्य दौर्ललित्यं कोपान्वितस्तं चञ्च्वा क्षताङ्गमकरोत् । कीटस्तु रुधिररूषितकलेवरस्तत्याज प्राणान्साकं दौरात्म्येन । पश्चाद्राजहंसस्तां निनाय स्वमावासम् । पश्यत एव मे राजहंसोऽपि कमलिनीमपजहारेति महतीं व्यथामापेदे युवा ; पर्याकुलस्तमेवानुजगाम । तदनु सोऽपि राजहंसः सानुकम्पं तां पद्मिनीं यूने प्रादात् । अत्रान्तरे हन्त ! भग्नः स्वप्नः ॥

तदनु सहसोत्थाय विश्वतो व्यलोकयत् । यथापूर्वं तदेव तरुतलमध्यशेत । तत्रत्याश्च बहवः पतङ्गा यथायथमुदडयन्त । तथाऽपि द्वित्राः परमशिष्यन्त रवेरस्तगमनाय । तदाऽपि

प्रखराः किरणाः। भगवांस्त्रयीतनुः मरकतखाचितमिव स्थितं गगन-तलमधिष्ठाय मलिनवदनः पश्यतिस्म विश्वतः ; नूनं कमलिनीं विहाय गन्तुमपारयन्दिशो विदिशश्च वीक्षाञ्चक्रे ॥

युवा सानुशयं प्रस्थाय नेदीयसि सरोवरे स्नानादि विधाय पुनः प्रतस्थे । किञ्चिदिवाध्वानं गत्वा ददर्श महान्तमचलम् । ततो गतिनिरोधात्तमेवाचलमारोढुमुपचक्रमे ॥

—:* इत्यूनविंशः परिच्छेदः *:—



## —*: विंशः परिच्छेदः :*—

### —: शैलशिखरम् :—

—*—

सा मुक्तकण्ठं व्यसनातिभारात् चक्रन्द विग्ना कुररीव भूयः ॥

( रघुः )

युवा किल तदेव शैलशिखरमारुरोह । दक्षिणेन गिरिवरं स्वच्छस्वादुजला नर्मदा प्रवहति स्म । अचलस्थिता अत्युच्चास्तरवश्शाखाप्रशाखाभिरन्तर्जलमात्मनो विश्वतः प्रदर्शयन्तः श्रीमतो नारायणस्यान्वकुर्वन् । अन्यतश्च नात्युच्छ्रितास्तरवो गुरुपु नम्रा इवान्तेवासिनो विचेरुः । तत्र किल नानाविधा विहङ्गमा मधुरं गायन्तः परिदूनानाश्वासयन्त इव, प्रणयपरिपूरितान्तःकरणान्विलासिनो विलासिनीभिस्संयोजयितुं सानुकम्पमनुनयन्त इव चावर्तन्त । तदाप्येक एव युवा तदेवगिरिशिखरमारोहन्नास । मृदुपवनविकीर्णस्तस्य किल कचकलापः क्वचिदंसोपरि क्वचिदधरप्रान्ते क्वचित्कपोलतले प्रणृत्यन् यूनो लपनसौन्दर्यमुत्तेजयामास ॥

तत्र पर्वतशिखरे मनोरमे पुष्पोद्याने प्रमोदतुन्दिला कुमुदिनी चन्द्रिकाच्छलेन विमलं वसनं वसाना सकलाभिः कलाभिः पूर्णेन कान्तेन मधुकरनिनादव्याजेन संलपन्ती मन्दंमन्दं जहास । स

किल हासः गगनतले तरङ्गिणीतरङ्गेषु ताराखु कुसुमेषु च वितस्तार विश्वतः। मालयः पवनः पर्वतोपरि सद्यः प्रफुल्लानां सुमनसां आमोदसर्वस्वमादाय मन्दमन्दमाववौ। पिपासितश्च मधुकरनिकरः प्रतिकुसुमं मधूनि रुञ्जहार। तादृशीमचलस्य शोभामालोकयन्युवा व्यचिन्तयत्, 'नूनमयं शिल्पविद्याभिमानिन्या कयाऽपि देवतया यथामनीषितं स्यान्निर्मितः। नो चेत्कथमेतादृशी शोभा? तथाहि—विश्वतस्सुसज्जिता मनोहारिणो गण्डशैलाः। तत्र तत्र विचित्रास्तरवः! कति लताः? कति मञ्जर्यः? कति कुसुमानि? कति निर्झरिण्यः? कति प्राणिनः? कुत्रचिन्निर्झराणां कलरवः। कुहचित्पतगानां गानाविसरः। हन्त! यथा शिशुमङ्के निधाय मन्दंमन्दं गायन्ती समाश्वासयति धात्री, तथेयं धात्र्यप्यचलकुमारकमङ्के निधाय नूनमुपलालयति। हन्त! हन्त!! यत्रयत्र मे चक्षुः प्रसरति, तत्रतत्रैव निलीयते; नान्यतः सर्षपमात्रमपि चलति। हा! कथमियं यामिनी मन्दभाग्येन यापनीया' इति॥

विचिन्तयन्नेवं प्रतस्थे। यथायथा कोकिलानामालापः कर्णपथमाययौ, तथातथा यूनोऽपि प्राणाः कण्ठपथमाययुः॥

अत्रान्तरे कोऽपि धिक्कृतकोकिलालापः श्रुतिसुभगङ्करणो गीतध्वनिरश्रावि। तथा हि—

श्लो—अस्ति कुतस्ते भाग्यं प्रियतममुखचन्द्रचन्द्रिकां पातुम्।

तदेतदाकर्ण्य युवा नितरां विसिष्मिये, 'मानवसमागमशून्येऽस्मि-

न्पर्वतशिखरे कथमयमतिसुकुमारः कण्ठध्वनिर्व्यामोहयति मानसं मम । अहो ! ज्ञातं कस्या अपि कामिन्याः ध्वनिः । भवतु समाकर्णयामि सावधानम् ' इति तूष्णीमास ॥

( पुनरपि गायति )

अस्ति कुतस्ते भाग्यं प्रियतममुखचन्द्रचन्द्रिकां पातुम् ।
त्यज तन्मानस ! चिन्तां

तदपि समाकर्णयतो यूनो ववृधे कुतूहलमनितराम् ॥

( पुनरपि गायति )

अस्ति कुतस्ते भाग्यं प्रियतममुखचन्द्रचन्द्रिकां पातुम् ।
त्यज तन्मानस चिन्तां विधिलिखितं नैव लङ्घितुं शक्यम् ॥

यूनः किल मानसं तदानीं महति चिन्तासागरे न्यमज्जत् । गीतार्थे हि पर्यालोचिते नियतं काऽपि परिचितैव कामिनी स्वमुपालभत इति ज्ञायत इति पर्याकुलः पुनरपि श्रोतुकाम आसीत् ॥

( पुनरपि गायति )

श्लो — अहह ! दहति मारो निर्दयं मामजस्रं
स खलु विजयचन्द्रः कुत्र वा नास्मि जाने ।
तदपि हृदयमेतद्बध्यते तृष्णयाऽहो !
कथमिव भविताऽस्या भागधेयं वराक्याः ॥

गानमेतदाकर्ण्यानुपदमप्रतिभो युवा निश्चिचाय 'यदिदानीं बहोः कालादास्माकीना शोककालरात्रिः सुप्रभाता ' इति ॥

महाशयाः ! अपि नाम ज्ञायते 'कोऽसौ युवा ' इति ।

नायमन्यः कोऽपि; परिचितचर एवास्माकीनो विजयचन्द्रः। शैवलिन्यास्तरणिर्हि यदा भस्मसादकारि दस्युभिः, तदा किल प्रियंवदामुखादाकर्ण्य वार्तां विजयस्ततःप्रभृति प्रतिदेशं प्रतिकाननं चोन्मत्त इव पर्यटन्नचलशिखरमिदमिदानीमधिजगाम। इदमपि न किल नाधिगतं श्रीमद्भिः, यदियमास्माकीनाख्यायिकाप्रणयनी सैव शैवलिनी इति। प्रत्यहमपराह्णे समुपेत्य शैवलिनी गिरिशृङ्गमुत्तुङ्गं मुक्तकण्ठं सुचिरं रोदिति। किमपि किमपि गायन्ती च स्वयमेव स्वान्तमाश्वासयति। तदा हि महर्षिर्माध्यन्दिनाय नियमाय व्याप्टतो न किमपि जानीते। अहो! बहोः कालादद्य किल शैवलिन्यास्तादृशं सकरुणं गानं सफलं बभूव। तदेतदाकर्ण्य युवा स्वयमप्यगासीत्,

श्लो—अयि! विजयप्राणेश्वरि! सखि!
सुन्दरि! मा कुरु कालविलम्बम्।
अविलम्बितमिह कुरु ते वदन
सुधाकरमङ्गजतापहरम्॥

अतिसुकुमारं गानमेतदाकर्ण्य शैवलिनी साद्भुतहर्षसुन्मत्तेव शब्दपथमनुदुधाव। नातिदूरे किमपि प्रस्तरखण्डमध्यासीनमालोक्य व्यचिन्तयत्, 'किमयं प्राणप्रियस्स एव विजयः' इति। तदनु ससंभ्रममागत्यामन्दानन्दसंप्रफुल्लवदनारविन्दा काममुपोषिताभ्यामिव लोचनाभ्यां पिबन्ती सगद्गदं जगाद, "नाथ!

अपि स्मरसि मन्दभागिनीमिमाम् " इति । विजयस्तामालोक्य विस्मयस्तिमितलोचनो व्यचिन्तयत् 'किमयं स्वप्नः ? आहो-स्वित्काऽपि स्वर्वामा किं मामेवं प्रलोभयति ? तन्न, तदपि न सत्यं; सैव प्राणप्रिया शैवलिनी' इति ; अन्ततो निश्चिकाय ; व्याजहार च ॥

विजयः—प्राणप्रिये ! सरोजाक्षि ! कुतस्तेदुर्दशेदृशी ।
शैवलिनी—सत्यां ललाटरेखायां वक्रायां किं करोम्यहम् ।
विजयः—बाले ! ननु मुखाम्भोजं परिम्लानं कुतस्तव ।
शैवलिनी —इनेन रहिता कान्त ! पद्मिन्यास्ते कथं वद ।
विजयः—कथं शृङ्गमिदं तुङ्गमागता मञ्जुभाषिणि ! ।
शैवलिनी—यथा मे प्राणनाथोऽयमागतस्त्वं तथा ह्यहम् ।
विजयः—करभोरु ! गिरिश्चायं नाम्ना केनाभिधीयते ।
शैवलिनी—भारतख्यातमाहिमा विन्ध्योऽयं गिरिरुच्यते ।
विजयः—एकाकिनी कथं शृङ्गे निर्भीका वससि प्रिये ।
शैवलिनी—आस्ते तपोधनः कोऽपि शान्तः शृङ्गेऽत्र रक्षिता ।
विजयः—महाभाग्यवतः कान्ते तादृशां दर्शनं भवेत् ।
शैवलिनी—तादृशां दर्शनादेव ममेदृग्भाग्यमागतम् ।
विजयः—कान्ते ! तवाङ्गसङ्गेन कुरु मां भाग्यशालिनम् ।
शैवलिनी—इमामपि तथा कान्त ! कुरु न स्यां यथा पृथक् ।

तदेतदाकर्ण्य युवा धन्यमात्मानं मन्यमानश्शैवलिन्यास्सुकुमारमतुलनीयमतिगम्भीरं तादृशं वचनामृतं पायंपायमतितरां मुमुदे ; दूरीचकार च चिरागतमामनस्यम् ; मेने च तृणाय पुरन्दर-

नगरम् । तदनु प्रेमान्धस्सानुकम्पं सादरं सविलासं च तस्याः पाणि-कमलमुपमर्द्य पाणिना नितरां मुमुदे ॥

तदनु शैवालिनी सलज्जं मन्दंमन्दमलपत्—"प्राणप्रिय! आयाहीदानीमास्माकीनमाश्रमपदम्" इति । विजयोऽपि 'तथा' इति यान्तीं तामनुप्रतस्थे ॥

—* इति विंशः परिच्छेदः *—





## एकविंशः परिच्छेदः

—: आशाप्ररोहः :—

शास्त्रेषु निष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥

( मालतीमाधवम् )

अथ किल शैवलिनी निनाय विजयं मुनेराश्रमम् । तत्र कौशमासनमध्यासीनं तं मुनिं नातिदूरादेव प्रणम्य विजयस्तस्थौ। साऽपि शैवलिनी विवेशाश्रमस्यान्तः । मुनिस्सान्ध्यं कर्म साङ्गं निर्वर्त्य पश्चाद्विजयमप्राक्षीत्, " अयि ! को वा तवाभिजनः ? अत्र कथमायातः ? केन वा नाम्ना परिकर्मितः ? " इति । ततस्सविनयमगादीद्विजयः, " महात्मन् ! आस्माकीनः किलाभिजनः काञ्चननगराव्हः । नाम्ना चाहं विजयचन्द्रः । इयं च शैवलिनी नः प्रातिवेशिनी, सहचरी च आबाल्यात् । " पित्रा

सह तीर्थयात्रायै प्रस्थिता, मध्येमार्गं दस्युवशं गता " इति तस्याः प्रियसख्याः प्रियंवदायाः मुखादाकर्ण्य ततःप्रभृत्यनाथ इवोन्मत्त इव च प्रतिदेशं प्रतिकान्तारं च परिभ्रमन्ननन्तस्सुमनोरममिदं विन्ध्याशिखरमवाप; । अस्य किल मनोहारितया कवलितान्तःकरणस्तद्दर्शनसमुत्कण्ठासमाकुलितश्च निशामप्यविगणय्य च दर्शंदर्शं दृश्यजातमत्रायातः । अत्र किल नर्मदाप्रवाहकलकलसमाध्मातो विनिन्दितवीणाक्वाणः कोऽपि ललनाललामायाः कण्ठध्वनिर्मामकं कर्णकुहरममृतपूर इव विवेश । तदनु सावधानं विमृशन्ननन्ततः तस्याः कम्बुकण्ठ्याः शैवलिन्याः कण्ठध्वनिरिति निरचिनवम्; क्षणमात्रमिव स्थित्वा हन्त आलोलकुन्तलां तामेव शैवलिनीं अध्यक्षयम् । सा च मां नामग्राहमाव्हयत् । तदा किलाहं करगतमेवाकलयं स्वर्गम्; सविस्मयं सतर्कं सहर्षं च क्षणं तूष्णीमासम्; ततश्च शैवलिन्यास्तामेव वाचमाम्रेडयन्नानन्दसागरे न्यमज्जम्; तदनु कथंकथंचित्तया सह समागच्छन्नत्रभवतां सन्दर्शनेनात्मानं पवित्र्यकरवम् "इति ॥—

महाशयाः सोऽपि मुनिर्भवतां परिचितचर एव रमानन्दः । स किल मुनिर्विजयस्य वचनमाकर्ण्य सस्मितवदनश्शैवलिन्यास्समीपमेत्य 'चिरादज्ञातोद्विजयायात्मानमर्पितवती' इति । सा किलेदानीन्तना नव्यशिक्षिता ललना इव निर्भयं निर्लज्जं नात्मनः प्रणयकथां गुरूणामग्रतः कथयितुमास प्रगल्भा; किन्तु ह्रिया स्वपादाङ्गुलिनख एव निहितदृष्टिरासीत्; न

किंचिदप्युन्नमय्य च मुखकमलं शशाक कथयितुम् । मुनिरिङ्गितमात्रादेव तदीयं भावमजानात्साकल्येन । तदनु कुटीराद्बहिरागत्य विजयायादिदेश, "अद्य किलास्माकीना चिन्ता दूरीकृता । यदीच्छसि तर्हि शैवलिन्याः पाणिं गृहणिष्व । अहमपि व्यपगतविचारस्तपसे यतिष्ये" इति किंचिदिव स्थित्वा पुनरप्यवादीन्मुनिः "शैवलिन्या मातापितराविदानीं क्व" इति । युवा न्यवेदयत्– "यदा किल दस्युभिर्लुण्ठिता नौका तदा शैवलिन्या मातापितरावपि तत्रैवास्तामिति वार्तां परमश्रौषम् । ततः परं यद्वृत्तं तत्तु शैवलिन्येव जानाति" इति । तदनु शैवलिनीमाहूय मुनिरप्राक्षीत् । सा च बहिरागत्य सबाष्पमवनतकन्धरा यथावृत्तमावेदयामास । तदेतदाकर्ण्य सकरुणमवादीदृषिः– "अम्ब कुत एतावन्तं कालममुं वृत्तान्तमगोपीः ? समाश्वसिहि । तव मातापितराविदानीं सुखमासाते । कल्य एव तत्र त्वां नेष्यामि । तावपि काञ्चननगराय प्रस्थाप्य विजयेन साकं विवाहमङ्गलं च कारयिष्यामि । अद्य किल निशा भूयसी जगाम । अद्य याहि; विधायाभ्यवहारं सुखं शेष्व" इति । शैवलिनी मातापित्रोर्दर्शनं च भविष्यतीत्याकर्ण्य नितरां मुमुदे । तदनु सर्वेऽप्युपयुज्य फलादि शिश्यिरे ।

विजयः किलेत्थं व्यचिन्तयत् 'यदनाप्सं महता प्रयत्नेन मानसक्षेत्रे आशाबीजं, तत्किल बहोः कालान्महर्षेः करुणारससेकेनेदानीमङ्कुरितम्' इति ।

महाशयाः ? विजयश्शैवलिनीमुपेत्य यथायथा मुमुदे , तथा तथा निद्राऽपि सपत्नीव तामसूयन्ती दूरीबभूव । विजयश्च निद्रा समागमादपि शैवलिनीसमागममेव वरं मेने । हन्त ? हन्त ?? न केवलं विजय एव , किन्तु यः किलात्र संसारे चिराय प्रियया वियुज्य पुनरप्यावितर्कितमुपैति , स सर्वोऽपि जानीते निद्रासमागमसुखमतितुच्छमकिंचित्कराभीति ॥

——* इत्येकविंशः परिच्छेदः *——



## —:* द्वाविंशः परिच्छेदः *:—

## —* गुरुदर्शनम् *—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥
( रत्नावली )

विभावरी च यथानियमं व्यभासीत् । कोकिलाः पञ्चमध्वानेन दिनमणेरागमनमावेदयामासुः । प्राभातिकोऽपि पवनः प्रफुल्लाभिर्मालतीभिस्स्वैरं चिक्रीड । हंसतूलिकातल्पेषु विलासिनो विलासिनीभिस्सविलासं निशां नयन्तः प्राभातिकं कोकिलारावमप्रियमुद्वेगकरमिव च मत्वा कथंकथमपि तल्पानि तत्यजुः । द्विजवराश्च स्वंस्वं कालञ्च नियमं निर्वर्तयामासुः । कर्मकरा अपि यथास्वं कर्मसु व्यापप्रुः । परन्तु ये किल पान्थास्सुदूरं सञ्चारक्लान्ताः ते केवलमस्वाप्सुः । मन्दमारुतस्तेषामुपकण्ठमेत्य केषांचित्कचानालोडयन् केषांचिच्छपनेषु फूत्कुर्वन् केषांचिदुत्तरीयादिकमुद्धरन् सूर्योदयवेलायामश्रेयस्करः स्वाप इत्यावेद्येव प्राबोधयत् । विन्ध्याचलस्थितं तिमिरमम्बरमणेर्भीतभीतमिव सदूरं पलाय्य क्वापि निलिल्ये । रविबिम्बमतिमनोहरं प्रसन्नमतिगम्भीराकृति दृश्यं च । जगति सकलमेव चराचरं यद्येवमेव स्यात्तर्हि को वा संसाराद्विरज्येत ; स्वर्गाय वा स्पृहयेत् ॥

ईदृशे समये विन्ध्याचलाद्विजयेन शैवलिन्या च समं मुनिरगच्छत् । दवीयः किल शैवलिन्याः पितुराश्रमपदं विन्ध्यतः । तदभिमुखमेव स जगाम । खरकिरणोऽपि स्वमाधिपत्यं प्रकाशयितुमुदजृम्भत । तदा किल शिरीषसुकुमाराङ्गी शैवलिनी तुषानलकणैरिवोत्तप्ते पांसुले पथि विचरन्ती नितरां मम्लौ । तां पेशलाङ्गीमालोक्य मुनिस्सकरुणमाचचक्षे " अम्ब ! शैवलिनि ! याहीदमुपान्तवृत्ति प्रच्छायशीतलं तरुतलम् ; विश्रान्तिमुपेहि ; अहमग्रतो गत्वा तावकं पितरमत्रैवानयामि " इति ॥

शैवलिनी—अयि ! महात्मन् ! माऽस्तु भवतामस्याः कृते तावान् क्लेशः । किन्नाम कष्टमिदानीमभागिन्या भवतामनुग्रहेण ? गुरुदेवदर्शनादावपि को नाम क्लेशः ? माऽस्तु मनागपि चिन्ता तत्रभवताम् ॥

रमानन्दः—इतस्सार्धक्रोशमात्र एव वर्तते तावकपितुराश्रमपदम् । यदीच्छसि, तर्हि यामः ॥

शैवलिनी—यातु भवानग्रे । तत्रभवन्तमनुयामि ; नाहं गणयामि मनागपि क्लेशम् । स्थातुमत्रनिमेषमात्रमपि नानुमनुते मानसं मम ॥

एवं वदन्त्यपि शैवलिनी पदात्पदमपि चलितुं न शशाक । तथाऽपि पितृदर्शनोत्कण्ठा बलादेनां निनाय । तयैव दत्तहस्तावलम्बा सा जगाम । परिश्रान्तां तां परिज्ञाय मुनिर्विचित्राभिर्मनोहारिणीभिः कथाभिरानन्दयन्निनाय द्रुततरम् ; शैवलिन्यास्तादृशं

स्वभावं च निर्वर्ण्य सहस्रशः प्रायच्छद्धन्यवादान् ; व्यचिन्तयच्च 'मार्गेऽस्मिन्ममापीदानीमुत्क्राम्यन्तीव प्राणाः । एवं विधेऽपि समये पतिपरायणा सुकुमाराङ्गी शैवलिनी पितृभक्त्यैव किल सहते तादृशमपि क्लेशम् । सत्यमस्या एव कृते निर्मितास्सनातनाः किल लोका विधात्रा । अयि ! शैवलिनि ! न किल त्वं मानवी, किन्तु देवयोषा । विजय ! त्वमपि धन्यधन्यः, यत ईदृश्यास्साध्वीललामभूताया नारीमणेरपाङ्गपात्रमसि । यस्य किलेदृशी मदिराक्षी वर्तते, किं तस्य नियतपतनेन क्लेशसाध्येन स्वर्गनिवासेन ? नूनमियममरवनिता स्वर्गात् जुगुप्समाना भुवस्तलमवततार । विजय ! तस्यास्सङ्गमात्त्वमप्यमरः । अत एवाहमवोचं "धन्यधन्यः" इति' इति ॥

एवं विचिन्तयन्नेव मुनिस्तदाश्रमोपकण्ठमेवायासीत् ॥

महाशयाः !

अपि नाम स्मृतिपथमुपयाति, यत्किल 'कलकलनादिन्या भागीरथ्यास्तीरं नीतौ मनोरमाचारुचन्द्रौ तत्रत्यनानातरुगुल्मावृते मार्गे भ्रमन्तावन्ततः कुत्रचिद्यज्ञपावकालोकमालोक्य जग्मतुः । तत्र च ब्रह्मचर्यमवलम्ब्य पुरः स्थितां प्रसन्नमुखकमलां विश्वहितकारिणीं निखिलपुमर्थदायिनीं पुरुषोत्तमप्रणयिनीं सभक्तिश्रद्धमर्चयन्तौ स्वर्गद्वारमपावृतमानेनतुः । तदेवैतत्पवित्रतमं काननम्' इति ॥

तदेव कान्तारमुपेत्य जगाद मुनिः, "शैवालिनि ! इदमेव तत्काननम् । नेतः परं कुत्रापि गन्तव्यम् । तत्रैव तव माता-

पितराविवकाग्रेण चेतसा ध्यायतः पद्मालयाम् । यन्नातिदूरे पुराणं भग्नाविशेषमिष्टकचितं मन्दिरमवलोक्यते, तदेवाश्रमपदं तव पितुः । अकुतोभयं किलेदम् । अत्र हि जातिवैराण्यपि सत्त्वानि परस्परं सौहार्देनैकत्रासते । तव मातापित्रोस्तपोमहिम्नैव शान्तमिदमाश्रमपदम् । अहङ्किल सांसारिकाय सुखाय प्रदाय जलाञ्जलिं, छित्वा च मायाजालं, एतावन्तं कालमनैषं योगेन । किन्तु तव मातापितराविव नातिचिरादेव नाप्तापं तपस्सिद्धिम् । अत्र कोऽपि महर्षिरास्ते । स किल विश्वामित्र इव महानुभावः विरक्ताग्रणीर्विषयपराङ्मुखश्च । तप एव परममैश्वर्यं तस्य । स चेत्प्रसन्नोऽनुगृह्णीयात्त्वां, तर्हि परममङ्गलमवाप्स्यथाः" इति ॥

तदनु सर्वेऽपि तदेवाश्रमपदमवापुः ॥

—*: इति द्वाविंशः परिच्छेदः :*—



## त्रयोविंशः परिच्छेदः

### —: आश्रमपदम् :—



काष्ठादग्निर्जायते मथ्यमानात्
भूमिस्तोयं खन्यमाना ददाति ।
सोत्साहानां नास्त्यसाध्यं नराणां
मार्गारब्धास्सर्वयत्नाः फलन्ति ॥

( प्रतिज्ञायौगन्धरायणम् )

आश्रमाभ्यर्णमेत्य रमानन्दः, " शैवलिनि ! विजयेनास्त्व क्षणमत्रैव । अनुपदमागत्य नयामि त्वाम् " इति उक्त्वा अन्तरवजगाहे । तत्र च तदानीं ऋषिणा सह मनोरमाचारुचन्द्रयोः धर्मविचारः प्रावर्तत । तमेनमायान्तमालोक्य रमानन्दं स ऋषिरुदञ्जलिरुदस्थात् । प्रावर्तत च तेषामेवं सल्लापः—

ऋषिः — नमस्ते मुनिशार्दूल तपोनिर्धूतकल्मष ! ।
रमानन्दः— सततं कुशलं भूयात्तथा धर्मे मतिस्तव ॥ १ ॥
चारुचन्द्रः— मदुत्तमाङ्गं राजर्षे भवत्पादाब्जरेणुभिः ।
वञ्चितं सुचिरं दैवादद्य पूतं भवत्विदम् ॥ २ ॥
रमानन्दः— अचिरात्सफलं भूयात्तपस्तव मनोरथैः ।
मनोरमा — नमो मुनीन्द्र भवते करुणाकर सद्गुरो ! ॥ ३ ॥
रमानन्दः— देवद्विजगता भक्तिर्वर्धतामनिशं तव ।
चारुचन्द्रः— धन्योऽस्मि भाग्यवानास्मि भवतां सदनुग्रहात् ॥ ४ ॥

रमानन्दः—— अङ्गीकरोषि चेद्भद्र ! किंचित्कार्यं ब्रवीम्यहम् ।
चारुचन्द्रः—-अकिङ्करेऽपि मयि वः कथमेवं प्रयुज्यते ॥ ५ ॥
रमानन्दः—अस्ति कन्यामणिः काचिन्नाम्ना शैवलिनीति किम्? ।
मनोरमा—हन्तात्मजाया मे तस्याः किमासीन्मुनिपुङ्गव ? ॥ ६ ॥
रमानन्दः—-अधीरा भव मा वत्से ! पश्यस्यद्यैव ते सुताम् ।
चारुचन्द्रः—बाढं ममैव सा कन्या मन्दभाग्यस्य सद्गुरो ॥ ७ ॥
रमानन्दः—विवाहः किमु निर्वृत्तः कन्यायास्तव सन्मते ? ।
चारुचन्द्रः—-नासीन्मुने विवाहोऽपि कन्यारत्नस्य मे बत ! ॥ ८ ॥
रमानन्दः—आश्रमाद्बहिरेवास्ते जामात्रा सह ते सुता ।
मनोरमा—अनुजानीहि मां तूर्णं पश्याम्येनां मुनेऽधुना ॥ ९ ॥
रमानन्दः—तथैवास्तु तनूजा ते विजयाय प्रदीयताम् ।
चारुचन्द्रः—धृताऽऽज्ञा तत्रभवतां शिरसाऽद्य मया मुने ! ॥ १० ॥

तदनु रमानन्दस्सत्वरमाश्रमाद्बहिरुपेत्य शैवलिनीं विजयं च निनायाश्रमाभ्यन्तरम् । रमानन्देन प्रेरिता शैवलिनी प्रथमं तत्रत्यं ऋषिं ववन्दे ; तदनु पार्श्वतः स्थितौ मातापितरावपि प्रणनाम । तथा विजयोऽपि । तदा किल प्रस्नुतस्तनी मनोरमा सगद्गदं 'एहि वत्से ! प्राणप्रिये ? परिष्वजस्व मां मन्दभागिनीम्' इति गाढमाश्लिष्य शिरसि च समाघ्राय परिचुचुम्ब कपोलतले । ततश्च ताभ्यामनुयुक्ता जगाद निखिलमात्मनीनमुदन्तम् । विजयोऽपि स्वं वृत्तान्तमावेदयामास । ततः स ऋषिरवादीत्, " वत्से !

मनोरमे ! याहि तावकमभिजनम् । तत्र च विजयेन शैवलिन्याः पाणिं ग्राहय । प्रत्यहं परेशमाराधाय " इति । तदेतदाकर्ण्याऽगादीच्चारुचन्द्रः " सांसारिकेषु विषयेषु स्थित्वा कथं नाम तपस्या शक्यते विधातुम् " इति ॥

रमानन्दः—यद्यचञ्चलं स्यान्मानसं, तर्हि न कुत्राप्यन्तरायः प्रतिबध्नाति ॥

चारुचन्द्रः—शिरसा धृता तत्रभवतामाज्ञा । तदद्याज्ञापयतु तत्रभवान् नः स्वदेशगमनाय ।

रमानन्दः—श्वः प्रशस्ये कल्ये याहि । अहमपि यामि विन्ध्यम् ॥

एवं कृते च निश्चये प्रमोदतुन्दिलेषु तेषु, सा निशाऽपि सुखं व्यतीयाय । परस्मिन् दिने तत्रत्येन ऋषिणा चाभ्यानुज्ञातौ मनोरमाचारुचन्द्रौ शैवलिनीविजयचन्द्रौ च काञ्चननगरमभिप्रतस्थिरे । रमानन्दोऽपि प्रत्यर्पितन्यास इव निश्चिन्तो जगाम विन्ध्याचलं तपसे । तदनु गच्छन् चारुचन्द्रः त्रिपथगां तरीतुमितस्ततस्तरणिमममृगत । न काऽपि तरणिरधिजगे । अन्ततः कोऽपि प्लवो नयनपथमियाय । स तमालोक्य समाह्वयदौडपिकम् । स च समीपमाययौ । आगतस्सोऽपि विस्रम्भपात्रं परिचितचरो माणिक्यचन्द्रः । सोऽप्यनुयुक्तश्चारुचन्द्रेण स्वमुदन्तं यथावृत्तं न्यवेदयत् । तत्समागमेन च सर्वेऽपि मुमुदिरे । स च परं तीरं निनाय चारुचन्द्रादीन् ॥

महाशयाः !

माणिक्यचन्द्रः किल दस्युभिर्निपातितो मध्येगङ्गं प्रवाहेणोह्यमानः केनापि नाविकेन तीरं नीतस्तस्यैव भृत्यतामुपेत्य स्वयमपि नौकावृत्तिमेवाशिश्रयत् ; अद्य किल निजभर्त्रा संगतो नाविकानुमत्या च स्वं देशं प्रतस्थे ॥

—*: इति त्रयोविंशः परिच्छेदः .*—



## —* चतुर्विंशः परिच्छेदः *—

## —* काञ्चननगरम् *—

परस्परेण स्पृहणीयशोभं
न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः
पत्युः प्रजानां विफलोऽभविष्यत् ॥

( कुमारसंभवम् )

चारुचन्द्रः किल बहोः कालान्निजमवाप नगरम् ; कन्यायाश्च विवाहाय सन्ननाह । मौहूर्तिकैश्च निरचायि शोभनं लग्नम् । तदेतत्काञ्चननगरं च यथापुरमवर्तत । तथाहि— गगनतलपरिचुम्बि तदेव सौधकुलम् । ललितललिताभिर्लताभिरालिङ्गितास्त एव तरवः । स एव कुसुमसौरभसर्वस्वहरो मन्दमारुतः । स एव च मधुकरनिकरझङ्कारः । स एव च बालरसालेषु कोकिलालापः । किं बहुना ? सर्वदा तदेतन्नगरमपहसितसुरलोकमास ॥

तदनु वैवाहिकोऽपि वासरो यथायथा नेदीयान् बभूव, तथातथा शैवलिन्याः प्रमोदसागरोऽपि वेलां ललङ्घे । स किल न साधारणो वरः, यतो रूपे, गुणे, विद्यायामैश्वर्ये चादर्शरूप एव विजयः सर्वस्यापि लोकस्य । किंच चिराकाङ्क्षितो हि मनोरथस्सेत्स्यतीति शैवलिनी ननर्त । तीर्थयात्रायां शैवलिनी विजयकृते कतिकति वा दुःखानि न विषेहे ? तीर्थयात्रैव किलातितरां

विवाहायोपचचकार शैवलिन्याः । मध्येमध्ये बभूव चाधिकाधिक-मन्तरायः । तथाऽपि भगवतः श्रियःपत्युरनुग्रहात्स सर्वोऽपि तूल-कल्पमुदडयत । साऽपि शैवलिनी तदेतदखिलं विसस्मार जन्मा-न्तरे वृतमिव । सा किल वैवाहिकं वासरं गणयन्ती प्रत्यहमे-कैकमपि दिनं युगकल्पममन्यत । क्रमेण सोऽपि वासरः समुपतस्थे ॥

तदा किल विचित्रवादित्रविपुलनिनादतुन्दिलस्य नगर-स्यान्तरनवकाशतयोच्छूनं विदीर्णमिवोदरं परितो विशशार । पटकुटीव्यानेन वैवाहिकोऽपि मण्डपः परिहसितसुधर्माडम्बरो बभूव। जन्ययात्रा च ससंरम्भं प्रावर्तत । विजयोऽपि विविधालङ्कारपरि-ष्कृतः पञ्चशर इव मूर्तिमुपेतस्सविलासं पौरविलासिनीकटाक्षपरम्प-राभिरिव वन्दनमालिकाभिरलङ्कृते राजपथे जगाम । मन्दंमन्दं साऽपि शैवलिनी वरणमालिकां करे कुर्वाणा विजयमेव प्रतीक्षां-चक्रे । विवाहदर्शनाय समागता ब्राह्मणाश्च वरान्नबुभुक्षया भोजनवेलां प्रतीक्षांचक्रिरे । विवाहमण्डपद्वारमुपेयुषि वरे यथा-पुरन्ध्र्याचारं मङ्गलारत्यादिकं व्यधायि पुरन्ध्रीभिः । सलज्जं विती-र्णायां च वरणमालिकायां शैवलिन्या तयोरिङ्गितमालोक्य पौरल-लनाः कामं परिजहसुः। वरोऽपि कल्याणपीठमलंचकार शैवलिन्या। यथाकुलाचारं पाणिग्रहमहोत्सवः प्रावर्तत । ततश्च सभाजितास्स-भाजना महता विभवेन । तदनु द्विजवराणां च भोज्यजातं पर्य-वेषयन् नयने निमील्य परिचारकाः । द्विजवराश्चाकण्ठमुपभु-

ज्यापरिजिहीर्षवः पञ्चभक्ष्यपरमान्नादिकं कामं न्यनिन्दन्विधातारम्, "हन्त ! किमित्येकैकमेव प्रादेशमात्रमुदरमेकैकस्येति विनिर्मितं छान्दसेन विधिना ; न किल ब्रह्माण्डकलशानि शतं ततोऽप्यधिकानि वा निर्मितानि देहं परितः" इति । ततश्च यथाशक्ति भक्ष्यजातं निरनुयोगमादायादाय ययुस्स्वंस्वमावासम् ॥

ये किलामयादिभिः परिपीडिता नाययुर्वैवाहिकभोजनाय, ते सर्वेऽपि श्रावंश्रावं भोजनवैखरीं विषादमवापुर्वाचामगोचरम् ॥

वैवाहिके मण्डपे संलापो निर्निरोधं निर्लज्जं च प्रादुरास विलासिनीनां परिचिताभिरपरिचिताभिरपि विलासिनीभिः । विलासिन्यश्च संघशस्समेत्य विजयाय नानाविधा विषमास्समस्याः युगपद्व्यतारिषुः । सोऽप्यप्रतिभः प्रोवाच, "प्रत्येकं यद्यनुयुज्यते, तर्हि युक्तरूपमुत्तरं दास्यामि ; नोचेन्नाहं किंचिदपि वदामि" इति ; तूष्णीमास च । तथाऽपि विश्वतो विलासिन्यस्तं चक्रुः ; परिजहसुश्च "जामाता मूकः" इति । विवाहमण्डपे किल क्वचिद्विनिन्दितरम्भोर्वशीमेनकारूपाणां वारविलासिनीनां नर्तनम्, क्वचित्संगीतगोष्ठी, क्वचिद्वीणावादनं, क्वचिद्वेणुनिनादः, क्वचिच्च विचित्रवादित्रध्वनिः, किं बहुना ? शब्दगुणकमाकाशमिति नैय्यायिकानां वचनतत्त्वमनुभवगोचरोऽभूदागोपालबालम् ॥

अत्रान्तरे शैवलिन्याः प्रियसखी प्रियंवदा समेत्य सानन्दं, विजयेन सह सरससरसानालापानकुरुत ।

अहो ! वैवाहिक एव समयस्सर्वथा प्रशस्यतरः, यतस्तत्र

परललना इति वा परपुरुषा इति वा नास्ति मनागपि शङ्का । तदा किल निर्लज्जं स्वैरव्यवहारोऽपि न दोषाय, परंतु प्रमोदायैव पुरोभागिनामपि निखिलानाम् । निशीथे किल केऽपि विलासिनो निद्राजुषां वरपक्षीयाणां केषां चिद्वस्त्राण्यपहृत्य सचातुर्यं कम्बलानि परिधाय वदनेषु विकृतिमातेनिरे ; केषांचित्पाणिपादं बबन्धुः ; केषांचित्पार्श्वे विरूपा वाराङ्गना आशाययन् । एवमाचरितेऽपि विरूपव्यापारे न कोऽपि चुकोप । विलासिन्यः परं संघशस्सहस्ततालमुच्चैः परिजहसुः । एव मेवासीदाप्रभातं प्रमोदप्रक्रिया । ततस्सर्वा अपि ललनाः कथंकथं चित्प्रतस्थिरे स्वंस्वमुदवसितम् । ततश्च यथाकुलाचारमवसिते साङ्गे वैवाहिके मङ्गले शैवलिनी विजयेन साकं जगाम महता वैभवेन श्वशुरागारम् । विजयोऽपि शैवलिन्याः पाणिग्रहणेन नितरां मुमुदे ॥

मनोरमाचारुचन्द्रावपि यथारमानन्दादेशं विजयायैव शैवलिनीं प्रदाय प्रत्यर्पितन्यासाविव निश्चिन्तावास्ताम् ॥

—* इति चतुर्विंशः परिच्छेदः *—



## —*: पञ्चविंशः परिच्छेदः :*—

### —: युवद्वन्द्वम् :—

*If after every tempest come such calms*
*May the winds blow till they have wakened death*
*( Shakespeare. )*

काञ्चननगरे सानन्दं न्यवसतां तौ दम्पती ; पुनरपि कदाचित्तदेव परिचितचरं पुष्पोद्यानमवजगाहाते । नयनपथमुपगतमात्र एवोद्याने गङ्गासागरसंगमयात्रा, कृतान्तकल्पस्य करालतुण्डस्य मर्मभेदि वचनजातं, तस्य च करुणाकरस्य महात्मनो रमानन्दस्य साहायकं तदेतत्सकलमपि स्मृतिपथमयासीत् । ततश्च विन्ध्यपार्श्ववाहिन्या नर्मदायास्तीररामणीयकं, विरहिजनहृदयतोदावहं मन्दमारुतस्य दौर्ललित्यं, शैलशिखरे विजयसमागमभाग्यं च स्मारंस्मारं चिक्रीयमाणहृदया शैवलिनी विजयेन सह पुष्पोद्याने सविलासं विचचार । पुनरपि स एव मनोहरस्सायन्तनस्समयः समाययौ । क्रमेण विमलतरे गगनतले गणनादूराणि नक्षत्राणि निरन्तराणि प्रादुरासन् । मध्ये च षोडशकलापरिमण्डितस्सुधाकरो विरराज । धरातले कोकिलाः किल वसन्तसमागमवृत्तान्तमुच्चकैरावेदयांचक्रुर्विश्वतो जगति विलासिनाम् । सद्यः फुल्लानां वासन्तीनां सौरभसर्वस्वमादाय वासन्तिकस्समीरणस्सानन्दं विलासिनीनां चिकुरमकरानुल्लासयन्ववौ ॥

हन्त ! चिराय शिशिरस्य अतीदौरात्म्यान्नयनयुगाभेचनकं कामिनीनामङ्गप्रत्यङ्गसौन्दर्यं घननरंवसननिकरपिहितं क्वापि निलीनमासीत् ; अद्य तु वसन्तागमे विनाऽपि प्रयत्नं सकलनयनपथातिथिर्बभूव । तदा शैवलिनी किल विजयेन साकं सानन्दं शतपदं याति स्म । सुधाकरोऽपि प्रफुल्लया कुमुदिन्या चिक्रीड । उद्यानमध्ये विराजमानं तदेव सरस्तदाऽपि ज्योत्स्नालोकेन राजतमिव रराज । तत्र च स्फटिकमये सोपाने शैवलिन्याः प्रवृत्तिमधिजिगमिपुराचचक्षे विजयः, “ प्रियतमे ! दस्युवशं गता त्वं किंकिमकरोः प्रत्यागमनाय ? तदखिलमुपवर्ण्य नः कुतूहलमपनय ” इति ॥

शैवलिनी—नाथ ! किमनेन व्यथादायकेन मे वार्ताकर्णनेन ? दस्युवशङ्गता च निशितशरशकलिता बालकुरङ्गीव आसम्; किन्तु तवैव कृते कृपणानिमान् प्राणान् कथंकथं चित्प्रत्यवध्नाम् ॥

विजयः—प्राणेश्वरि ! नाहं तवानुरागपरीचिक्षिषयाऽनुयुक्तवान् ; किन्तु तावकमतिविमलं मनोहारि चरितामृतं पातुमेवाप्राक्षम् । नचेदाख्यासि, तर्हि न मे निर्वृतिमेति मानसम् ॥

तदनु शैवलिनी यथावृत्तं स्वं मर्मविदारकमुदन्तमकथयत् । गतोदन्तवर्णनसमयेऽपि बाष्पपरिप्लुतमभून्नयनयुगम् । तत्रत्याः पतगा अपि तदाकर्ण्य दूना इव कामं रेसुः । विजयोऽपि सकलमेतदाकर्ण्य पर्यश्रुनयनो बभूव ; दन्तांश्च कटकटापयन् करालतुण्डाय

वसन्तकुमाराय चातकुदशपत ; रमानन्दाय प्रतापसिंहाय च शतशो धन्यवादानदात् ; मनसैव रमानन्दं सहस्रशः प्राशंसीत् । उभावप्येवमेवान्योन्य गर्नामुपवर्णयन्तौ तत्रैवास्ताम् । अत्रान्तरे प्रियंवदा समेत्य जगाद, " अयि ! शैवलिनि ! अपि नामास्मिन्नुद्याने प्रफुल्लमतिमनोहरं चम्पकमालोकितवती ? पश्य पश्य तस्यामोद्गारिमाणम् " इति ॥

शैवलिनी —( साकूतं ) सखि ! कुत्र ? कुत्र ? नाहं जाने ।

प्रियंवदा— " अयि ! मुग्धे नहि करगतमपि न जानासि " इति विजयमालोक्य मन्दं जहास ।

विजयः— अयि ! प्रियंवदे ! किमनेन परिहासेन ? गात्रे किलाऽऽवयोर्भिन्ने, न तु प्राणाः ।

प्रियंवदा— यथा तथा वा भवतु । शतशो ददामि ते धन्यवादान् ।

विजयः— कुतः ?

प्रियंवदा— यत् शैवलिनीमव्यक्रीतदासीमकरोः ।

शैवलिनी— आयि ! अविमृश्यवादिनि ! किमकरोदिदानीमेव ?

प्रियंवदा— जानामि सखि ! जानामि । मध्येपुष्पोद्यानं कुञ्जसाक्षिकमेव क्रीता । विधिविलसितं का वा जानीते ? अतस्त्रुटिमात्रमपीतः परं वियोगो यथा न भवेत्तथा युवयोर्गात्रे अप्येकमेव स्यादित्याशासे ॥

तदेनदाकर्ण्य शैवलिनी सहासं सप्रणयकोपं च जगाद, "प्रियंवदे ! सशर्करं पयः का वा नाङ्गीकरोति । भवतु तथैव प्रियसख्यास्तवानुभावेन " इति । तदनु प्रियंवदा सस्मितमाह स्म " सखि मा कुरु कोपम् । यदीदानीमहमप्रियंवदा, तर्हि यामि " इति ॥

शैवलिनी—किमिह मिथ्याशंसया ? यथाप्रतिज्ञं विधाय याहि ।

प्रियंवदा—नाहं त्वमिव चतुरानना ; त्वां कोपयितुं वाऽत्र नाहमागता ; तद्यथागतं यामि ; त्वमेव यथामतमास्व ।

शैवलिनी—तर्हि किमु यासि परित्यज्य तव सखीमेकाकिनीम् ?

प्रियंवदा—हन्त ! हन्त !! चतुरे ! शैवलिनि ! विवादेऽस्मिन् त्वमेव किल विजयमधिगता । कुतस्ते शङ्का ? गृहे किल शारिकया विवदमानं शुकमनुनीयानुपदमायामि ॥

इति निगद्य प्रियंवदा द्रुततरं जगाम गेहम् । साऽपि शैवलिनी कञ्चित्कालं सविलासं स्थित्वा पश्चाद्विजयेन भवनमयासीत् ॥

महाशयाः ! विजयस्य किलाशालता चिराय प्रशस्यमाश्रयमवललम्बे ; कुसुमानि फलानि चाधिकाधिकं प्राप ॥

हन्त ! दुःखात्परमागतमेव सुखमतिहृद्यं जगति सर्वस्य।

चिरविरहिताावुभावपि परस्परसमागमात्परां मुदमापद्याते । शैवलि-न्यास्तादृश्यां सत्यामपि दुःखकालरात्र्यां दैवादचञ्चलसुख-रविरुदयाय ॥

इमौ दंपती नातिचिरादेव पुत्रमुखारविन्ददर्शनेन सुख-मास्ताम् ॥

—:* इति पञ्चविंशः परिच्छेदः *:—

इति श्रीवत्सकुलतिलकस्य तर्कव्याकृतितन्त्रसाहितीनिष्णा-तस्य कविशिरोमणेः श्रीगीताचार्यस्य तनूजन्मना महीशूरमहारा-जास्थानविदुषा अनन्तशयनमहाराजास्थानसमधिगतसरलकविसूरि-बिरुदेन रीवा महाराजमहितेन केताण्डपत्यभिजनेन राजगोपालच-क्रवर्तिना कृता शैवलिनी संपूर्णा ॥

